व्यक्तिगतजनकव्यक्तिगतसाधारण्यात् तथाभ्युपगमे चैकसमवाय्यादि-
नाशे सर्वतत्कार्यनाशप्रसङ्गः। तत्तज्जातीयसामग्रीतः सर्वतत्
तज्जातीयोत्पत्तौ। सामग्रीभेदस्य कार्यभेदहेतुतया प्रत्येकमिलित
तत्सामग्रीत्वविकल्पेन कार्य्यव्यक्त्यभेदप्रतिव्यक्तिस्वरूपभेदयोरन्यतर
प्रसङ्गश्च समवायित्वं प्रत्यपि साधर्म्यानुविधायिनियमेऽव्यापत्तेः
व्यावृत्तत्वे चानियमात्। नियतजातीयत्वे सति तत्सादेश्यमिति चेन्न
समवायिदेशापेक्षया कार्य्यकारणयोः सादेश्यनियमानभ्युपगमात्
संयोगिदेशापेक्षया गुणादावसम्भवात् यथाकथञ्चित्सादेश्यमात्रस्याति
प्रसञ्जकत्वात् अदृष्टादेर्भिन्नदेशस्यापि कारणत्वोपगमे सर्वं प्रति
कार्य्यसामग्र्याः कारणत्वापातात् पूर्वभावनियमादेस्तुल्यत्वात् अनुगते
च रूपेऽन्वयव्यतिरेकसम्भवात् व्यक्तिगतसामान्ययोरेव कार्य्यकारण
त्वापत्तेः तद्गतसामान्ययोरेवान्वयव्यतिरेकादिनियमे व्यक्त्योश्च कार्य्य
कारणतेति सम्बन्धाभाववैयधिकरण्यात् सामान्याकारप्रविष्टां
व्यक्तिमादायान्वयव्यतिरेके विशेषस्याकारणत्वं स्यात् सामान्याकारेण
च पूर्वमतः कार्य्यत्वं द्रव्यसामग्र्या वृक्षसामग्र्या शिंशपासामग्र्या
च पृथग्व्यक्तिजननापत्तेः पृथगेव तासां सामग्रीत्वात् सर्वासाञ्च
व्यक्तिं प्रत्येव जनकत्वात् द्रव्यत्वादीनामजन्यत्वात्। शिंशपासामग्र्या
वृक्षसामग्रीसंवलिताया एव सामग्रीभावात् पृथक् शिंशपाव्यक्तिरिति
चेन्न वृक्षसामग्र्याः शिंशपासामग्रीमतीत्यापि शालतमालादेर्वृक्षस्य
जननात् पृथक्तया वृक्षव्यक्तिजननापत्तेः। सापि शिंशपासामग्री
तन्मिलिता जनिकेति न व्यक्तिभेद इति चेन्न शिंशपायामतिरिक्तस्य
वृक्षकार्यभावापत्तेः वृक्षशिंशपासामग्र्योरेकीकृतयोर्जननाविशेषात्।
वृक्षसामग्री च वृक्षजनन एव कथं क्वचिच्छिंशपासामग्रीं क्वचि-
त्तमालसामग्रीमपेक्षत इति स्यात् एकस्य वृक्षलक्षणस्य कार्य्यस्य
सामग्रीभेदे भेदापातात् अनुगतायाश्च वृक्षसामग्रीत्वे पृथग्वृक्षव्यक्तेः
पृथक् शिंशपादिव्यक्तेः उत्पत्त्यापत्तेः इत्यादि स्वयमूहनीयम्।

नियमे प्राक्कालीनतयाभिधीयमाने प्रमितस्य व्यवच्छेदो वर्त्त-
मानभविष्यत्कालौ प्राक्कालस्य व्यवच्छेदकोऽविवेचनीयः। तत्र तदिदं
वचनं प्राक्यं वर्त्तमानादिबुद्धय एव स्वविषयवैचित्र्यमानत्वमिति चेन्न
तथाहि वर्त्तमानादिबुद्धेरेव कोऽविषयः। कालविशेषइति चेत् कालस्य
विशेषः स्वाभाविक औपाधिको वा। नाद्यः कालस्य भवद्भिरेकत्वा-
भ्युपगमात् यएव कालो वर्त्तमानः प्रतीयते सएव पूर्व्वं भावीति
पश्चाद्भूतइति च न प्रतीयेत। त्रिविधस्वभावएवायमिति चेन्न भेद
प्रसङ्गात् व्यवस्थानुपपत्तिप्रसङ्गाच्च यदैव वर्त्तइतिप्रत्ययस्तदैव
वृत्तो वर्त्तिष्यतइति प्रत्ययप्रसङ्गात्। द्वितीयश्चेदुपाधिरभिधीय-
ताम् सूर्य्यादिक्रियासम्बन्धोभेदः स इति चेन्न भूतभविष्यतोरपि क्रिया
सम्बन्धप्रत्ययस्यावश्यं वक्तव्यत्वात् य एव दिवसः सूर्य्यगतिविशेषाव-
च्छिन्नो वर्त्तइति प्रतीतः स एव हि तदवच्छिन्नोऽप्यतइत्यवगम्यते
वर्त्स्यतीति च नहि निर्व्विशेषस्य कालस्य तदतीतत्वं प्रतीयतेऽनागतत्वं
वा किन्तूपाधिविशेषणेनैवावच्छिन्नस्य येनैवासौ पूर्व्वं दिनान्तरात्
व्यवच्छिन्नो वर्त्तइति प्रतीतः तेनैवोपाधिना ततएव व्यवच्छिन्नो वृत्त
इति वर्त्तिष्यतइति च कदाचित् ज्ञायते। ननु सत्यमेतत् परं यदा
तदुपाधिसम्बन्धस्तस्य स्वरूपेणावतिष्ठमानस्तदा वर्त्तमानप्रत्ययः यदा
सएव विनष्टो भवति तदा भूतप्रत्ययो यदानागतस्तदा भविष्यत्
प्रत्ययइति नैतदपि यद्यपि नष्टोविवर्त्तितार्थस्तदा तज्ज्ञानस्यैव
तज्ज्ञानोपायत्वमित्याश्रयानवस्थयोरन्यतरप्रसङ्गः। विनष्टादिशब्दा
स्वातीतादिपर्य्याया स्तेषां सर्व्वेषामेव अर्थे निरूप्यमाणे तन्मध्य
पतितमेकशब्दं प्रयुज्य तन्निरुक्तिं कुर्व्वाणः स्वाश्रयप्रश्नो मातापितृ-
मानसि। तत्क्रियावच्छिन्नः कालो वर्त्तमानः तत्प्रागभावावच्छिन्नो
भविष्यन् तद्ध्वंसावच्छिन्नो भूतइति चेन्न अतीतानागतप्रतीतिकालेपि
क्रियावच्छिन्नः प्रतीयतइति वर्त्तमानप्रत्ययप्रसङ्गस्य तादवस्थ्यात्।
क्रियानवच्छिन्नस्य तस्य तत्प्रागभावप्रध्वंसाभावावच्छेदानुपपत्तेः प्राग-

भावस्य प्रागर्थानिरुक्त्या कथं न दुरधिगमः प्रध्वंसस्यापि प्राग-
भावात् कथं विशेषो वक्तव्यः। अभावोविनाशी प्रागभावः उत्पत्ति
मान् ध्वंसइत्यनयोर्विशेषइति चेन्न कोहि प्रागभावस्य विनाशो येन
विनाशीत्युच्यते। यदि प्रतियोगिभूतोघटादिः प्रध्वंसस्यापि प्रागभाव-
वत् प्रतियोगीति सोऽपि विनाशी प्राप्तः। उत्पत्तिमांश्च प्रध्वंसइति
उत्पत्तिपदार्थो विवेचनीयः। यद्यसावसतः सत्त्वं तच्च सामान्यं तदा
अभावे असम्भवएव। अथ स्वरूपसत्त्वं तदा प्रागभावेपि प्रसङ्गः
तस्यापि कदाचिदसत्त्वात् पूर्वमसतः पश्चात् सत्त्वं विवक्षितमिति चेन्न
पूर्व्वेदानींपश्चादर्थस्यैव निरूप्यमाणत्वात्। एतेन कारणावच्छिन्नं
सत्त्वमुत्पत्तिरित्यपि निरस्तं पूर्व्वापरनिर्व्वचनमन्तरेण कारणार्था
निर्व्वचनात्। अस्तु तावदतीतानागतयोर्यथातथानिरुक्तिः यत्क्रियाव
च्छिन्नो यः कालः स तत्क्रियापेक्षया वर्त्तमानो नत्वन्यापेक्षयेति
चेत् तदपेक्षयेति कोऽर्थः। किं तदुपधानेन उत तदवधिकतया तत्-
प्रतियोगिकतया उत तेन प्रकारेण वा नाद्यः उपाध्यवच्छिन्नस्यातीता
नागतप्रतिपत्तिविषयत्वमपि तस्येत्यसकृदुक्तत्वात्। नापि द्वितीयः
अस्मादयं दीर्घइतिवदस्मादयं वर्त्तत इत्यवध्यपेक्षामन्तरेण प्रतीयमान-
त्वात् सर्व्वदैव च त्रिविधावध्यपेक्षया आसीदस्ति भविष्यतीतिप्रत्यया
व्यवस्थाप्रसङ्गात्। अतएव न तृतीयः नापि चतुर्थः अतीतानागत
प्रतीतिकाले क्रियावच्छेदप्रकारेण वर्त्तमानप्रत्ययविषयत्वप्रसङ्गात्।
नासौ क्रियावच्छेदनरूपः प्रकारोऽतीतानागतकाले वर्त्ततइति चेन्न
वर्त्तमानताया अद्याप्यनिरूपणेन वर्त्ततइत्युक्त्वा विशेषस्य दर्शयितु-
मशक्यत्वात् तत्क्रियाकाले तत्क्रियावच्छिन्ना वर्त्तमानता इति चेन्न
कालस्य कालाश्रयतया निरूपणासम्भवात् कालान्तरस्यानभ्युपगमात्
तस्यैव च कालस्य तदाश्रयत्वे आत्माश्रयत्वापत्तेः। स्यादेतत्
ग्राहकविज्ञानविषयोग्राहकविज्ञानाश्रयश्च कालो वर्त्तमानः वर्त्त-
मानोपाधिप्रागभावावच्छिन्नश्च पूर्वः तत्प्रध्वंसावच्छिन्नश्चानागतः प्राग-

भावप्रध्वंसयोश्च स्वाभाविकमेव भेदमादाय व्यवस्था प्राग्व्यवस्थाहेतु-रभावप्रागभावइतिस्वभावभूतस्यैव विशेषस्य कार्य्यमादाय लक्षणम् अनागतव्यवस्थानिदानमभावः प्रध्वंसइति च प्रध्वंसस्येति नैवं ज्ञाना स्वप्रकाशतापक्षे स्वोपश्लिष्टस्य स्वयंग्रहणानुपपत्तेः कथं वर्त्तमानता ग्रहः ज्ञानान्तरेण तथाग्रहे वर्त्तमानतावभासाङ्गीकारे तदासौ दृष्टो मयेतिप्रत्ययस्य तदासौ मया दृश्यते इत्याकारतापत्तिः। अतएव स्वप्रकाशपक्षेप्यनिस्तारः। यावानर्थः स्वप्रकाशे वर्त्तमानतयोक्तः तावत एव परेण ग्रहणे व्यभिचारात् स्वप्रकाशतायाश्चाधिकेपि विषये वि-शेषाभावात् स्वरूपमेव विशेषइति चेन्न तस्यानुगमाननुगमाभ्यामनुप-पत्तेः प्राक्प्रध्वंसाभावयोश्च स्वरूपताविशेषेपि कतरो भूतभव्यव्यव-हारस्य कतरस्वानागतव्यवहारस्योपाधिरित्यनुयुक्ते कार्य्यभेदजनक तया च तन्निरुक्तावुत्तरे पूर्वप्रत्युक्तां पूर्व्वतापरतानिरुक्तिं विना जन्य जनकत्वाज्ञानमिति। उपाधिभेदाच्च कालभेदे योप्येकतयाभिमतः कालः सोऽपि चन्द्रसूर्य्यक्रियाद्यसंख्योपाधिभेदसम्भवेन नाना स्यात् तत्रायमेवोपाधिर्नायमिति चाविनिगम्यत्वात् प्रतिक्षणस्वभावभेद वादिपक्षेपि च नानाक्षणेषु वर्त्तमानत्वादिव्यवहारार्थमुपाध्यनुसरणा वश्यम्भावेनोक्तोपाधिदोषग्रासस्यैवापातादिति।

ननु तथापि विषयभेदेनावश्यम्भविलक्ष्यं प्रतीतिभेदस्य दुरपलाप त्वात् अतः सामान्यतः सिद्धौ विशेषताविवेचनाशक्तौ संशयएवास्ता-मिति चेन्न संशयस्यापि निर्व्वक्तुमशक्यत्वात् तथाहि संशयस्य निश्च-यात् किमुपाधिकृताविशेष उत जातिकृतः आद्ये किं विषयविशेष-णोपाधिना उत कारणविशेषेण उतान्येनैव केनचित् सम्बन्धिना कृतः। न प्रथमः तस्यानिर्व्वचनात् उभयकोटिविषयः संशय इति चेन्न कोटिद्वयसमुच्चयनिश्चयस्यापि संशयत्वप्रसङ्गात् प्रतीतिरेव नैव मिति चेन्न भेदाभेदप्रतीतीनां शाब्दस्वप्नादिप्रतीतीनाञ्च तादृशां सम्भवात् समुच्चयप्रकाशे कोट्योरविरोधः प्रकाशते संशये तु विरोध

इति विशेष इति चेन्न पीतः शङ्ख इत्यादिषु पीतत्वशङ्खत्वादेर्भिन्नाश्रयता
नियमं विरोधं जानतोऽपि प्रत्ययात् तथापि तस्यां बुद्धौ न भासते
विरोध इति चेन्न कथमेवमिति प्रकाशेऽपि तदप्रकाशात् तयोरेकाश्रय-
योर्विरोधप्रतीतेरवश्योपेयत्वात् मिथ्याधियस्ता इति चेन्न संशयस्यापि
भवद्भिरयथार्थबुद्धितयाङ्गीकारात् तथात्वस्य बुद्धेराश्च तद्विषयत्वेन वि-
शेषाभावात् नहि मिथ्यारजतबुद्धौ रजतबुद्धिरेव न भवति अव्यवस्थित
कोटिद्वयविषयः संशय इति चेत् कोऽयमव्यवस्थितता पाक्षिकतेति चेन्न
पर्य्यायं पृच्छामोऽपितु किं कोटिद्वयस्वरूपमेव उत कोटिद्वयस्य धर्म्मः
कश्चिदसौ आद्ये कोटिद्वयनिश्चयेन सत्त्वाविशेषस्तदवस्थः। द्वितीये
यद्यसौ केनचित् प्रमाणेन सिद्धः तदा तस्यैव कोटिद्वयाश्रिततद्धर्म्म
विषयस्य संशयत्वप्रसङ्गेन प्रमाणत्वव्याघातः। अथ कस्यचित्
प्रमाणस्य नासौ विषयः नास्ति तर्हि विषयकृतो विशेषः एतेनान्योऽपि
यः कश्चित् विषये विशेषः स्थाणुतदभावपुरुषतदभावादिरूपोऽभि-
धीयते सोऽपि निरस्तो वेदितव्यः अत्यन्तासतश्च तस्य प्रति-
भासे जितमसत्ख्यातिवादिभिः क्वचित् तत्रैतत्रैव प्रसङ्गः। नापि
द्वितीयः कारणविशेषोहि विशिष्टा सामग्री वा स्यात् तदेकदेशो वा
नाद्यः तस्याप्रत्यक्षत्वेन तदुपहितस्य प्रत्यक्षतोऽवगमानुपपत्तेः नच
तस्यानुमेयत्वं लिङ्गासम्भवात् कार्य्यविशेष एव लिङ्गमिति चेन्न
कार्य्यगतस्यैव विशेषस्य चिन्त्यमानस्याद्याप्यप्राप्तेः जातिभेदस्य दूष-
णीयत्वात्। नापि द्वितीयः इन्द्रियस्य तदेकदेशस्य साधारणधर्म्मदर्श-
नादेर्विशेषद्वयस्मरणादेश्च साधारणधर्म्मविशेषद्वयज्ञानप्रत्यक्षत्वादा-
वपि हेतुत्वेन साधारण्यात् अदृष्टे च तस्मिन् लिङ्गाभावात् तेन
कार्य्ये विशेषमात्राधानस्य निरस्तत्वात् तस्य विषयत्वेनानुव्यवसाय
साक्षिककार्य्यगतविशेषीभवनासामर्थ्यात्। नापि तृतीयः तस्य दर्श-
यितुमशक्यत्वात्। नच द्वितीयः धर्म्मिस्वरूपादेरपि तद्विषयतया संश-
यितत्वप्रसङ्गात् नचैवं संशयं स्थाणुर्व्वा पुरुषो वेति संशये सतीदमा-

परामृश्यमानस्य ऊर्द्ध्वत्वगाविनो धर्म्मिणः स्वरूपसत्त्वेपि स्वरूपमेव भवति नवेति द्रष्टुरभिमानो व्यवहारो वा किन्नामकः स्वरूपसत्तामात्रावलम्बिनस्तस्य ज्ञानस्य निश्चयत्वमेव ततः किमिति चेन्न एकस्यैव ज्ञानस्य निश्चयत्वसंशयत्वजातिसङ्करः । स प्रामाण्याप्रामाण्यवत् भविष्यतीति चेन्न अतएव हि तयोरपि जातित्वानङ्गीकारः । किन्नाम तथाभूतातथाभूतार्थत्वलक्षणोपाधिद्वयस्वरूपतास्वीकार एव तयोः यदा च संशयत्वनिश्चयत्वलक्षणजातिद्वयसम्भिन्नं तद्विज्ञानमाश्रीयते तदा कञ्चित् विषयमपेक्ष्य संशयत्वं कञ्चिदपेक्ष्य निश्चयत्वमित्यापेक्षिकी जातिव्यवस्थितिरपोव्यपूर्व्वः पन्थाः ईदृशस्य पथः पान्थेनापि भवता किं नियामकमभिधेयं येन धर्म्मिणि तस्य निश्चयत्वं व्यवतिष्ठेत । विशेषदर्शे च संशयत्वं विशेषदर्शनादर्शने इति चेत्तर्हि भवति स्थाणोः स्थाणुत्वं पुरुषत्वं पुरुषस्य विशेषः प्रतीयते चासाविति विशेषदर्शनात् तत्रापि निश्चयत्वप्रसङ्गः । संशयात् पूर्व्वं नास्ति विशेषदर्शनमिति युक्तस्तत्रापि संशय इति चेन्न धर्म्मिधियः पूर्व्वं तर्हि कथं तद्गतविशेषदर्शनं स्यात् संशयकाले नास्ति विशेषदर्शनमित्यनन्तरं तर्हि संशयानुत्पत्तिप्रसङ्गोपि युक्तएव तदीयविषयात् विशेषात् व्यतिरिक्तस्य विशेषस्य दर्शनं विवक्षितमिति चेन्न स्थाणुर्व्वा पुरुषो वेति संशयानन्तरं दारुमयो मांसमयो वायमिति संशयेनोपपद्यते तदुभयमयत्वव्यतिरिक्तयोः स्थाणुत्वविशेषयोः पूर्व्वज्ञानोल्लिखितत्वात् । अन्यतरविशेषदर्शनं संशयप्रतिरोधकं संशये तूभयोरुपदर्शनम् अतो नोक्तदोषप्रसङ्ग इति चेत् तर्हि स्थाणुः पुरुषश्चेति कुतोपि भ्रमे जाते दारुमयो वा मांसमयो वेति संशयप्रतिरोधो न स्यात् पूर्व्वज्ञानेन विशेषद्वयोपदर्शनस्य कृतत्वात् विशेषदर्शनं हि विशेषनिश्चयो विवक्षितो नतु विशेषज्ञानमात्रं येन संशयोपनीतादपि विशेषात् संशये प्रतिरोधः प्रसज्येतेति चेत् नैवं संशयेन चानुपदर्शितो विशेषो यत्र न संशयस्य निश्चयत्वमिति व्यवस्थायां सिद्धा-

याम् उपदर्शितनियामकसिद्धिर्भवति सिद्धे चास्मिन् नियामके संशयस्य विशेषद्वयं प्रति नियमकं नास्तीति सिध्येदित्यन्योन्याश्रयापत्तेः को वारयिता। स्यादेतत् संशयज्ञानस्य धर्म्मिविषयत्वेऽभ्युपगम्यमाने त्वदुक्तं दोषमापद्येत तच्च तदनभ्युपगमएव निवर्त्तते तेन धर्म्मिज्ञानं निश्चयात्मकम् अन्यदेव स्थाणुर्वा पुरुषोवेति चान्यदेव संशयज्ञानं इत्यभ्युपेष्यामइति चेत् मैवम् एकधर्म्मिसम्बन्धोपनयव्यतिरेकेण स्थाणुत्व पुरुषत्वयोर्विरोधएव नास्तीति स्थाणुर्वा पुरुषोवेत्येतदेव न स्यात् नहि यस्य कस्यचित् स्थाणुत्वेन यस्य कस्यचित् पुरुषत्वं विरुध्यते धर्म्मिसम्बन्धमनन्तर्भाव्य विरोधे जगति तयोरन्योन्यस्य व्यतिघ्नतोरसत्त्वमेव प्रसज्येत तस्य धर्म्मिणोवा पुरुषत्वनिर्णयाद्यथा संशयोनिवर्त्तते नोत्पद्यते वा तथा स्वात्मनः पुरुषत्वनिर्णयात् संशयोनिवर्त्तेत नोत्पद्येत वा विशेषाभावाद्यथाह्युक्तं स्वशरीरविषयः संशयस्तथैव हि पुरोवर्त्तिविषयोपि नासौ कथञ्चिदमर्थेन सामानाधिकरण्याभिमानः योऽयमूर्द्ध्वताधर्म्मा स किं स्थाणुरुत पुरुषइति कस्माद्वा प्रत्यभिज्ञादयोऽप्येकं ज्ञानमङ्गीकृता इत्युच्छिन्ना विशिष्टज्ञानसङ्कथा सञ्जातश्च गौरश्वः पुरुष इतिवत् विशकलितोविज्ञान संसारइत्यास्तां विस्तराभिनिवेशः।

नन्वस्ति तावत् स्थाणुर्वा पुरुषोवेति परस्परविरुद्धार्थावगाही प्रत्ययः स्वविषयं तथाभूतमुपस्थापयिष्यति न उक्तबाधकैः सर्व्वप्रकार खण्डने परिशेषासम्भवात् यच्च स्वरूपमादाय विरुद्धार्थत्वमभिधीयते तदपि निर्व्वक्तुं न शक्यते तथाहि भावतदभावयोः कोविरोधः सहानवस्थानमिति चेत् देशभेदेन सहाप्यवस्थानात् देशाभेदेनेति चेन्न संयोगाद्यव्याप्यवृत्तित्वं यद्यभ्युपैषि तदा तथाप्यनुपपत्तिः। प्रकारभेदेन तथाभावस्याभ्युपगमात् तस्य पक्षे एकेन प्रकारेणैकस्मिन् सहानवस्थानं विरोधः संयोगाद्यव्यापकत्वानभ्युपगन्तृपक्षे च देशाभेदेन सहानवस्थानं स इति चेन्न तर्हि तदुभयोवस्थानसाहित्यनिषेधोवा तद्-

भयावस्थाननिषेधसाहित्यं वा स्यात् नाद्ये अप्रसिद्धप्रतियोगिकत्वं
तदुभयावस्थानसाहित्यस्य क्वचिदप्यप्रसिद्धेः अत्रविधाननिषेधात्
मके विधाननिषेधादिरूपत्वाङ्गीकारेण प्रसिद्धप्रतियोगिकत्वाभ्युप
गमात् यदाहैको वस्तुनः प्रतियोगितेति अन्यत्र । अत्रैकत्र क्वचित्
किञ्चित् तादृगेव निषिध्यतीति द्वितीये तु तदुभयावस्थानसाहित्य
स्वीकार एव स्यात् तदुभयनिषेधयोस्तदुभयत्वेनाङ्गीकारात् । पर-
स्परप्रतिक्षेपकत्वं विरोधइति चेन्न तद्धि परस्परप्रतिक्षेपं प्रति कारण
त्वं वा तदात्मत्वं वा न प्रथमः प्रमाणाभावेन तथाविधत्वस्यानङ्गी-
कारात् न द्वितीयः प्रतिक्षेपशब्दार्थस्योभयानुगतस्यानिर्वचनात्
यत्रैकस्य सत्त्वं तत्रापरस्यासत्त्वं नियमेन यत् स विरोधस्तयोरिति
चेन्न सत्त्वासत्त्वयोरेकापरात्मत्वेनैकाधिकरणत्वात् सम्बन्धव्यतिरेकत्वे
च एकसत्त्वस्यैव चापरात्मकतया स्वीकारेण यत्रैकस्य सत्त्वं तत्रैकस्य
सत्त्वमिति वचनार्थप्रसङ्गेन पौनरुक्त्यादिदोषापातात् यत्र घटा-
भावइत्यस्य खल्वयमर्थः यन्नाम यस्याधेयतया सम्बन्धी घटाभावः
तत्रैव घटोनास्तीत्यस्याप्ययमर्थः तस्याधेयतया सम्बन्धी घटाभाव
इति यत्र घटइत्यस्य कोऽर्थः यस्याधेयतया सम्बन्धी घटः तत्र घटा
भावो नास्तीति कोऽर्थः तस्याधेयतया सम्बन्धी घटाभावसम्बन्धनि-
षेधः घटाभावसम्बन्धस्य घटाभावात्मकतया घटाभावनिषेधस्यापि
घटात्मकतेति तस्मात्तस्याधेयतया सम्बन्धी घटइत्येवार्थः अतो घट
तदभावयोर्भेदं मनसि कृत्वापि न विप्रतिपत्तव्यमिति यत्रैकस्याव-
स्थानं तत्रैकस्यैवेतिनियमाभिप्रायेण पौनरुक्त्यादिरिति चेन्न निय-
मस्य यत्किञ्चिदन्यव्यवच्छेदकत्वेनासिद्धत्वापातात् विरोधिव्यवच्छेदक-
त्वस्य च विरोधानिर्वचनात् भावपक्षेऽभावव्यवच्छेदोऽभावपक्षे वा
भावव्यवच्छेदो नियमार्थइति चेन्न एकरूपानभिधानेऽनुगतरूपविरोधा
निर्वचनात् । किं वा भावाभावव्यवच्छेदयोरभावभावविधानातिरिक्त-

योरनभ्युपगमे पुनरपि च यत्र भावस्तत्र भावः यत्राभावस्तत्राभाव इत्युद्देश्यविधेयभावानुपपत्तेरभेदाद्धेति पौनरुक्त्याधिकफलाभाव एव स्यादेतत् भावाभावयोः स्वरूपमेव विरोधः नचैवं सत्यविरुद्धतापत्तिः यथा सत्ताभावरूपैव सती स्वात्मनि सदिति भवितु व्यवहारं करोति तथाभावाभावौ विरोधात्मानावेव स्वात्मनि विरुद्धरूपं भवितव्यवहारं । कुर्य्यातें कस्यैतौ विरोधइति चानुयोगे स्वाश्रयस्येत्युत्तरं किन्तत्र विरोधफलमितिप्रश्ने भेदव्यवस्थानमित्यभिधेयम् । यदाह अयमेव हि भेदोभेदहेतुर्वा यद्विरुद्धधर्म्माध्यासः कारणभेदश्चेति तदेतदनुपपन्नं यतयोर्हि विरुद्धत्वं प्रत्येकं वा स्यात् मिलितयोर्वा नाद्यः प्रत्येकमेवाश्रयैकत्वभङ्गप्रसङ्गात् नैकत्वाभावोभेदोऽभिमतः किन्तु अन्योन्याश्रयापेक्षभेदरूपविरुद्धधर्म्मवत्त्वमिति चेन्न तस्याभावात् कालभेदेनैकस्य भावाभावाश्रयत्वाभ्युपगमात् तदभेदइति चेन्न तदभेदस्य स्वाभाविकस्य विवक्षितत्वे विशेषणवैयर्थ्यात् एकोपाध्यवच्छिन्नत्वस्य विवक्षितत्वे कालभेदाभिमतेपि सम्भवात् भिन्नोपाध्यनवच्छिन्नत्वस्य विवक्षितत्वेऽसम्भवात् असहावच्छिन्नभिन्नोपाध्यनवच्छिन्नत्वस्य वाञ्छितत्वे सहसत्त्वस्य एककालरूपत्वेन तत्रापि कालभेदविकल्पावृत्त्यापत्तेः मिलितत्वञ्चानयोरेकदेशत्वं वा एककालत्वं वा एकप्रकारेण वृत्तिर्वा वृत्तिप्रकारान्यैकोपाध्यवच्छेदोवा नाद्यः भावात्यन्ताभावयोस्तदभावात् न द्वितीयः भावस्य प्रध्वंसप्रागभावाभ्यां तदनुपपत्तेः न तृतीयः संयोगाद्यव्याप्यवृत्तितावादिपक्षे गमनादौ संयोगभावाभावयोस्तदभावात् अव्याप्यवृत्तिधर्म्मानभ्युपगन्तृपक्षे भावाभावयोर्वृत्तौ प्रकारान्तर्भावे प्रमाणाभावात् नापि चतुर्थः सहि यदि निर्देष्टुं शक्यते तदापि भावप्रागभावयोर्भावप्रध्वंसयोर्वैकदानभ्युपगमेन तद्विशेषितयोरप्येकदावश्यमनभ्युपगन्तव्यतया कदा विरोधस्य तदाश्रयतेति वक्तुमशक्यत्वात् किञ्च भावप्रागभावयोर्भावप्रध्वंसयोर्यदि तथा भावोऽभ्युपगम्यते तदा चाश्रयभेदप्रसङ्गः अभावान्तरेऽपि सावकाशत्वान्न

परस्परप्रतिषेधात्मकत्वञ्च । अथ नाभ्युपगम्यते तदा भावप्रागभावयो र्भावप्रध्वंसयोश्चाविरोधापत्तिः तत्तदसत्त्वमात्रयोर्विरोधो ननु तत्त-दसत्त्वविशेषयोरिति चेन्न विशेषस्य तथाप्यविरोधात् कदापि सद्भाव स्थितियोग्यतापत्तेः नियमेन तथात्वे वा अविरोधव्याघातात् मात्र शब्देन च यदि विशेषशून्यत्वमसत्त्वस्योच्यते तदा तदनभ्युपगम एव प्रमाणाभावात् नहि निर्विशेषासत्त्वमात्रसद्भावे प्रमाणमभिधातुं शक्यते । अथ मात्रशब्दोपादाने सत्यपि विशेषे असत्त्वस्य साधारण रूपपुरस्कारेण विरोधस्य व्यवस्थितिप्रदर्शनार्थं तदा भावप्रध्वंसयो स्तादृगेवास्तु दोषापत्तिः प्रध्वंसादौ विशेषे सामान्यरूपस्यावश्या-भ्युपगम्यत्वात् तदाद्यैव विशेषे विरोधपर्य्यवसानात् भावाभावयो र्विरोधानभ्युपगमे तवाप्यनिष्टापत्तिरिति चेत् कथमापत्तिः । तर्कभेद इति चेत्

अथ कस्तर्कः अभ्युपगतव्याप्यं प्रति व्यापकप्रसञ्जनं सः तत्प्रसञ्जनञ्च स्वीकाराऽर्हताबोधनमिति चेन्न अव्याप्तेः अस्ति ह्यप्रसङ्गेऽपि सम्भा-वना नाम तर्कः तद्यथा यदि जलं सहकारिभिः सम्पत्स्यते तदा मे तृषं शमयिष्यतीति इष्टापादनेऽपि गतत्वाच्च । अनभ्युपेतव्यापकमित्य पीति चेन्न तथाभूतमपि प्रत्यश्चाप्यात् व्यापकप्रसञ्जने गतत्वात् व्याप्ये-नेत्यपि कार्य्यमिति चेन्न विकल्पासहत्वात् किं परमार्थतो व्याप्यव्यापक भावव्यवस्थितयोः स्वरूपेणेष्टानिष्टत्वम् उत व्याप्यव्यापकभावेन तत् । नाद्यः तथात्वाज्ञानेन वैपरीत्येनेष्टेनापि प्रसञ्जनप्रसङ्गात् अन्यथा परैस्तथात्वेनानङ्गीकृतेन स्वयमपि परान् प्रति तथात्वेन व्युत्पादयितु-मशक्तेन परमार्थतस्तथाभूतेन प्रसञ्जने अप्रसङ्गात् । न द्वितीयः स्वयमपि तथेष्टानिष्टतायां सत्यां हन्त तादृशि प्रसङ्गे यदुभयोरित्या दिना दोषेण अप्रसङ्गतयानिष्टेऽपि गततयातिव्यापकत्वात् स्वयं व्याप्य तयानिष्टेनेत्यपि विशेषणीयमिति चेन्न स्वयमपि व्याप्यतयेष्टेन स माने ह्यव्यापके विषये प्रसङ्गस्याव्यापनात् । अथ स्वयमनिष्टव्यापके

स्वयं व्याप्यतयेष्टेन यत्र भवति तत्तत्रानभ्युपगतव्यापकं परं प्रति परा-
भ्युपगतेन व्याप्येन व्यापकप्रसञ्जनं तर्कः एवं सति हि स्वानिष्टव्यापके
स्वयमिष्टव्याप्येन यत्र प्रसङ्गः तत्र गगनादतिव्याप्तिर्या या च स्वमात्रेष्ट
व्यापके स्वयमपि व्याप्यत्वेष्टेन प्रसङ्गस्याव्याप्तिः ते निरस्ते भवतइति
चेन्न यथात्र घटोऽभविष्यत् तदा अद्रक्ष्यदित्याद्यव्यापनात् तत्र स्वय-
मनिष्टदर्शनरूपव्यापके स्वयं व्याप्यतयेष्टेनैव हि दर्शनयोग्येन घट
सत्वेनासौ प्रसङ्गः । अथ तत्र सत्तयापि स्वयमिष्टेनेति निषेध्य
कोटौ प्रवेशस्य निषेधोऽभिधीयते एवं यत्र भवति तदपि न एवम्भूते
विपर्य्ययापर्य्यवसायिनि गततयातिव्यापकत्वात् विपर्य्ययपर्य्यवसायिते
त्वयि प्रक्षेप्यमिति चेन्न केवलपरपक्षदूषणाय परमात्राभ्युपगम्यमान
व्याप्यत्वेनैव क्षमस्य परं प्रति व्यापकप्रसञ्जनस्याव्यापनात् तत्र स्वयं
व्याप्त्यनभ्युपगमेन विपर्य्ययपर्य्यवसायित्वासम्भवात् सप्रसङ्ग एव न
भवति विरोधमात्रं तदिति चेन्न अनिष्टं व्याप्याभ्युपगमबलेन परं
प्रत्यापाद्यतइत्येवम्भूतस्यार्थस्योभयत्रापि तुल्यत्वात् तुल्यत्वेपि लक्षण
करणासामर्थ्यात् यदि विपर्य्ययपर्य्यवसायिन्येव प्रसङ्गत्वं त्वया परि-
भाष्यते तर्हि मयापि परबाधनमात्रत्वमेव प्रसङ्गतायाः विपर्य्यय
पर्य्यवसायिनि तु तत्र विरोधतायाः परिभाषितुं शक्यत्वात् अन्यथा
विरोधित्वमेवोभयोरपि स्यात् प्रत्यवस्थानवैचित्री चेत्तत्र विरोधा-
दिभेदः साचापि तुल्यैव अतएव सम्भावना तर्कादन्यैवेति निरस्तम्
आरोपादपि व्याप्यतानिमित्तव्यापकाभ्युपगमाविशेषात् अतएव पर
प्रमितेनेति विशिष्य परानिष्टापादनमात्ररूपविपर्ययापर्य्यवसायितर्कता
निरस्तेति निरस्तम् । परमार्थतोव्याप्त्यभावेपि पराभ्युपगममादाय
प्रसङ्गप्रवृत्त्युपपत्तेः कथं हि परेण व्याप्यतयानुमतं प्रति व्याप-
कानुमत्या नापतितव्यं नहि प्रसङ्गावाच्यत्वं व्याप्तेराश्रयते किन्नामा
भ्युपगममात्रम् अनभ्युपगतोवस्तुगत्या स्थितेनापि तेनापादनाप्रवृत्तेः
अतएव परस्य प्रमाणेन व्याप्यानुमितिमुत्पाद्यापादनं क्रियते वस्तुगत्या

व्याप्यत्वञ्च तथात्वेनाभ्युपगतत्वञ्च द्वयमपि प्रसङ्गस्याङ्गमिति चेन्न
तथात्वेनाभ्युपगमस्यावश्यं प्रसङ्गाङ्गतया मन्तव्यस्य, परानपेक्षस्यैव
समर्थत्वेन वास्तवव्याप्यत्वस्यापि प्रवेशने प्रमाणाभावात् तत्राद्यः
प्रसङ्गः स्वपक्षसिद्ध्यङ्गं तस्य विपर्ययापर्यवसायिता दोषायैव स्यात्
प्रसङ्गस्य विपर्ययपर्यवसानदार्ढ्यार्थं दक्षतयोपन्यासात् सौगतानां
सत्त्वक्षणिकत्वव्याप्तिसाधकविपर्ययान्यथाभावदण्डप्रसङ्गवत् तामन्त-
रेण तस्य स्वपक्षसाधनाक्षमत्वात् तस्य व्याप्तिवास्तवत्वमपि मन्तव्यम्
अन्यथा विपर्ययेऽपि व्याप्त्यभावेन स्वपक्षसाधनाक्षमत्वादेव यत्तु
प्रसङ्गः परपक्षबाधमात्रं तत्र पराभ्युपगममात्रं प्रयोजकं तावतैव
परपक्षप्रतिक्षेपक्षमत्वेन वास्तवव्याप्तिविपर्ययपर्यवसानपर्यन्तानु-
सारित्वादिति युक्तं पश्यामः तथाच सति कथितलक्षणासङ्गतिस्तद-
वस्थैव । अथ व्याप्याभ्युपगमेनाप्यनिष्टस्य व्यापकस्य प्रतीतिस्तर्क इति
चेन्न इष्टार्थसम्भावनायामव्याप्तेः । तेन व्यापकस्य प्रतीतिः स इति चेन्न
इष्टापादनेऽपि गतत्वात् अप्रमितस्य तथेति चेन्न प्रथमानुमानेऽपि गत-
त्वात् अनुमाने व्याप्यस्य प्रमया तथा न त्वभ्युपगमेनेति चेन्न वस्तु-
गत्या व्याप्यस्य प्रमयापि प्रतिवाद्यसिद्धस्य व्यापकानुमानासम्भवेन
तत्राभ्युपगमपर्यन्तं गन्तव्यत्वादेव । नन्वेवमन्यतरासिद्धं व्याप्यं प्रसा-
ध्यानुमानव्यवस्थापनमुच्छिन्नं तदप्रसाधनेऽन्यतरासिद्ध्या तत्प्रसाधने
परस्याभ्युपगन्तुरपसिद्धान्तमनुज्ञाप्य वादिना प्रसाधिताद्व्याप्यात् व्या-
पकसाधने पर्यनुयोज्योपेक्षणादिति किं तत्र तथा न स्यात् किमनया
प्रस्तुतया चिन्तया अन्यतरासिद्धस्य तावद्व्याप्यस्याभ्युपगमं परेणाकार-
यितैव न व्यापकसाधनमभ्युपेयं तद्व्याप्रमा स इति चेन्न मिथोविरु-
द्धादौ तर्काभासेऽपि गतत्वात् आश्रयासिद्ध्यादिव्यतिरेके सतीति चेन्न
सन्दिग्धधूमदर्शनात् यद्ययं धूमवान् तदाऽग्निमानिति सम्भावनायाः पर-
मार्थेन तथार्थावस्थानात् प्रमात्वं त्वनवधारयन्त्या अनवधानात् तत्-
काले प्रमात्वेनाप्रतीयमानेऽप्यस्तीति चेन्न तर्कयोरस्फोरकत्वात् सर्वस्य

षास्य पूर्व्वोक्तोभयानिष्ठव्यापकेष्वव्याप्योदाहरणे गतत्वेनातिव्यापक-
त्वात् तद्यवच्छेदार्थमारोपितस्य व्याप्यस्याभ्युपगमेनेति करणे च सिद्धे
तद्व्याप्येन प्रसङ्गस्याव्यापकत्वात् तद्यथा कार्य्यत्वाद्यद्यदृष्टमङ्कुरादि मीमां
सकः प्रशंसति तदानीमविशेषेण कर्तृकार्य्यमपि पर्य्यवस्येदस्य तदिति ।
अपि चात्माश्रयोऽन्योन्याश्रयः चक्रकं व्याघातोऽनवस्था प्रतिबन्दी-
त्यपाद्यापाद्यैर्भिद्यमाना षट् तर्क्यन्ते स्वरूपञ्चैषां स्वस्याव्यवहितस्वा-
पेक्षणमात्माश्रयः अन्योन्यस्याव्यवहितान्योन्यापेक्षित्वमन्योन्याश्रयः
अन्तरितस्य तदेव द्वयमात्माश्रयोऽन्योन्याश्रयश्चक्रकं विरुद्धसमु-
च्चयो व्याघातः उपपाद्योपपादकप्रवाहोऽनवधिरनवस्था स्वाभ्युपगतदोष
तुल्यता प्रतिबन्दीति । तत्रात्माश्रयस्य सम्बन्धिद्वारभेदादाभासत्वं
यथा प्रमेयत्वस्य आत्मनि वृत्तौ क्वचिन्नैवमपि यथानेककालस्थस्य
घटस्य पूर्व्वकालवृत्त्यात्मनउत्तरकालवृत्तिमात्मानं प्रति कारणत्वेऽ-
न्योन्याश्रयस्य व्यक्तिभेदात् यथा ज्ञानेन संस्कारस्य तेन च ज्ञानजनने
चक्रकस्यापि तस्मात् यथा वीजेनाङ्कुरस्तेन स्तम्बः तेन च वीजं जन्यत
इत्यत्र व्याघातस्योपाधिभेदात् यथा कालभेदादिना जननाजननादौ
अनवस्थायाः क्रियायै परस्परानन्त्यापेक्षणात् यथा सामग्र्याः कार्य्यं
जननाय स्वसामग्र्यानपेक्षणे तामेतामधोधावन्तीमनवस्थामाचक्षते
क्वचिन्नैवमिति यथा स्वाश्रये भिन्नबुद्धिजननाय स्वगतभेदानुपजीवना-
दपि भेदस्यानन्त्ये प्राग्लोपादिदोषात् तामेतामूर्द्धं धावन्तीमनवस्था
माचक्षते प्रतिबन्द्या विशेषात् यथा धूमानुमानेऽप्युपाधिशङ्का प्रतिबन्द्या
स्तर्कानुकूलत्वादिति तदेतेषामापादनानि तर्काभासाः कथमुक्तलक्षणेन
न संग्राह्याः सत्यपि व्याप्त्याद्यदोषे प्रसङ्गस्यानुगतेन विशेषणेना-
भासीभूतत्वात् । प्रसङ्गस्थाने तावतां विशेषणानामभावेनापि लक्षणं
विशेषणीयमिति चेन्न अन्योन्याश्रयाभासत्वप्रयोजकस्य व्यक्तिभेदस्या
भावो नानवस्थायामेवमात्माश्रयाभासत्वप्रयोजकस्य द्वारभेदस्याभावो
नात्माश्रयान्तरादाविति व्यक्तमव्यापकत्वापत्तेः अपि चापसिद्धान्त-

विरोधादिष्वपि तर्कलक्षणं गच्छत् कथङ्कारं वारणीयं यत्रैव निग्रहे तर्कान्तराणामन्तर्भावस्तत्रैवानयोरपीति पृथक् निग्रहानुपपत्तेः व्याप्त्याश्रयादेश्च मूलव्याप्तौ प्रमाणोपगमश्चेत् तर्हि प्रामाणिकत्वान्निर्दोषत्वं न चेन्मूलशैथिल्यमित्युभयतः पाशबन्धः कथं मोचनीयः । अथोच्यते यदेतदाश्रयत्वमाश्रितत्वञ्च तद्भेदे दृष्टं तद्यदि विवादाध्यासिते द्वयमुपेयते तदा भेदः स्यादित्याकारेणापादने नोक्तदोषापत्तिरिति नैवम् । एकत्र द्वयस्यापि दृष्टत्वात् तदाश्रयत्वं तदाश्रितत्वञ्च मिथो भेदनियतमिति चेन्न तन्मिथःशब्दाभ्यां व्यावर्त्तितत्वात् एतदाश्रयत्वादेतदाश्रितत्वाद्वा नैकत्वं स्यादित्यादिवचनभङ्ग्यापाद्यमिति चेत् नैवम् यद्येतदेवैतदाश्रयादि स्यात् तत्तदेतन्न स्यादित्याद्यापाद्यं नचैतत् युक्तं धर्म्म्यापाद्ययोर्व्याहतत्वात् । नच वाच्यम् आपाद्यस्य प्रमाणबाध्यतानुकूल्येवेति व्याघातादपि सा भवन्ती न दोषमावहतीति यत आपाद्यापादकयोः सामानाधिकरण्यानादरेऽतिप्रसङ्गः स्यात् अतो विपर्य्ययापर्य्यवसायित्वमेव स्यादेवं हि विपर्य्ययोवक्तव्यः ।

यन्नाम भवति चैतदेतत् तस्मात् नैतदाश्रयइति नचैतदेतत् भवितुं शक्नोति एतदित्युद्दिष्टे धर्म्मिण्येतद्विधानासम्भवात् उद्देश्यविधेययोः प्रकारभेदस्याभावात् नच प्रसङ्गमात्रमेतत् बाधायैवास्तु कृतमस्य विपर्य्ययपर्य्यवसानेनेति युक्तं स्वयमपि प्रसङ्गमूलस्य व्याप्तेरिष्टतया प्रसञ्जितनिषेधे तद्यतिरेकप्रामाण्यस्यावश्यमन्तव्यत्वापत्तेः । अतएवैतदन्यत् स्यादित्यपि न शक्यप्रसञ्जनम् एतदन्यत्वस्य एतत्स्वरूपभेदमादायैव प्रतीतिपर्य्यवसायितया प्रसङ्गे व्याघातादेवाविपर्य्ययेप्येतद्विशेषितान्यविशेषितान्यत्वविधायिनोविशेषणतयाप्रविष्टमात्मानमात्मनि विधीयमानं न क्षमते एतदनन्यत्वस्य एतदन्यान्यत्वस्य एतत्त्वादेव अन्यत्वःवधेरात्मनउपलक्षणत्वे चान्यत्वमात्रमुपलक्ष्यमाणमन्यस्मादन्यत्वमादाय पर्य्यवस्येत स्वरूपएव विलक्षणमन्यत्वविशेषमवधिरात्मोपलक्षयतीति न घटते यतोऽन्यत्वमात्रमेवावधिविशेषै

उपधीयमानं तत्तदन्यत्वप्रत्ययव्यवहारोपपादकं भवदन्यत्वव्यक्तिभेद
पर्य्यन्तं गमनं प्रमाणस्य न सहते यदि चान्यत्वव्यक्तिभेदोपि स्यात्
तथापि प्रसङ्गमूलभूता व्याप्तिः सामान्याकारपुरस्कारित्वादेतेनैवोप-
धीयमानानामन्यत्वव्यक्तीनाम् एकमादाय प्रवृत्ता तथैव प्रसङ्ग विप
र्य्यये बाधमयन्ती स्यादेवोक्तदोषानङ्गनायेति एवं प्रकारता चाश्र-
याश्रयिभाववत् प्रकारान्तराश्रयेष्वप्यात्माश्रयोदाहरणेष्विति दिश्यते ।
अन्योन्याश्रयो यथा भेदेनावगतात् भेदज्ञानोपगमे सोऽपि त्वया कथ
ङ्कारमुपन्यसनीयः न तावत् यद्येतदेतद्बोधाधीनबोधाधीनबोधं स्यात्
तदा न बुध्येतेति तथा सति व्याप्त्यसिद्धेः एतद्बोधाधीनबोधं यत्त-
द्बोधाधीनबोधस्य तथैवादृष्टचरत्वात् कयाचन व्याप्यव्यापकभेदकल्प
नया व्यभिचाराप्रतीतचरत्वयोर्वारणाप्यतथात्वशङ्काखण्डकतर्कदुर्लभ
त्वात् एवमन्योन्याश्रयान्तरेपि चक्रकस्य मध्ये परमन्तर्भाव्यात्माश्रया
न्योन्याश्रयाविव विपरिणमतइति तद्दोषं नातिक्रामति व्याघातस्तु यथा
सन्नास्तीत्यत्र तमपि कथं प्रयोक्ष्यसे यदि यद्ययं सन् स्यात् तदानी-
मसन्न स्यात् इति तर्हि असन्न स्यादित्यस्यापि सन्न स्यादित्यस्मिन्नेवार्थे
पर्य्यवसानात् अभेदेन व्याप्यव्यापकभावस्यैवासिद्ध्यापत्तिः स्वभाव
विरुद्धोपजीविनी च विरुद्धान्तरे तद्व्याघातनिरासादेव निरस्तप्राये
गोर्महिषस्ततो न भवति अगवात्मता नियता यतोमहिषात्मतेति
एव हि तयोर्विरोधः अनवस्थातु यथा सत्तायामपि सत्तान्तरमित्य-
नवधौ सत्ताप्रवाहइष्यमाणे तत्र कथं प्रत्यवस्थेयं न तावत् यदि
सत्तायां सत्ता स्यात् तदा न विश्रान्तिः स्यात् सत्तायां सत्ताभ्युप-
गमस्य विश्रान्त्यभावेन सह व्याप्तिसिद्ध्यसिद्ध्योर्दोषग्रस्तत्वात् प्रति
बन्दी च सुलभैव । किञ्च प्रमेयत्वाभिधेयत्वव्यवहार्य्यत्वसन्निकर्षवत्त्वा
भावप्रतियोगित्वादीनामात्माश्रितत्वदर्शनात् कथमात्माश्रयताखण्डि-
का व्याप्तिः सव्यभिचारा न स्यात् हारव्यक्तिभेदस्यापि व्यभिचारि
व्यतिरेकित्वात् स्वपक्षाश्रयवादिना स्वयमेव स्वज्ञानस्य एवमभावेऽभाव

मस्वीकुर्व्वता स्वयमेव स्वाभावत्वस्य एवं तदेव ग्राह्यं तदेव ग्राहक-
ञ्चात्मप्रतीतौ एवं तदेव ज्ञाप्यं ज्ञापकारणञ्च शब्दोवाचक इत्यत्र
एवञ्च तदेव नाश्यं नाशकञ्च प्रध्वंसिनि एवं तदेव सम्बन्धि सम्बन्धश्च
स्वभावसम्बन्धोपगमे इत्यादि बहुलमुपगमादात्माश्रयतदाभासविवे-
काय किन्नियामकमुपेयम् । अन्योन्याश्रये चान्त्योपान्त्यशब्दयोरन्योन्य-
नाशकतायां समव्याप्तिकयोश्चान्योन्यव्याप्यव्यापकतायाम् एककार्य्य
कारिणाञ्चान्योन्यसहकारितायामेवमन्यस्मिन्नपि तत्र तत्र दर्शनात्
कथं न व्याप्तिभङ्गः कश्च विशेषोयद्व्यतिरेकोविशेषणमुपादीयेत । तत्र
तत्राविरोधात् नैवमिति चेन्न अन्यत्र तथाभावदर्शनस्य विरोधाभ्युप
गममूलस्याविशेषात् । तत्र तत्र तथात्वे प्रमाणसद्भावएव विशेषइति
चेत्तर्हि सर्व्वत्रानभ्युपगममूलं तथात्वे प्रमाणाभावएवोपजीव्योदूषण
मिष्यतां कृतमन्योन्याश्रयेण व्यभिचरितदोषत्वेनेति । चक्रकेपि दुःख
जन्मादिसूत्रोक्तादिषु व्यभिचारदर्शनात् अव्याप्तिर्विशेषव्यतिरेक
दर्शनदुःसहत्वञ्च कार्य्यकारणभावस्य तज्जातीयतया नियतत्वेन व्यक्ति
भेदस्य चक्रकानन्तर्भूतत्वात् । व्याघातेप्येकस्यैव जनकत्वाजनकत्वे तथा
नच कालभेदादिर्विशेषो घटते घटतत्प्रध्वंसादौ कालभेदेपि तादात्म्य
व्याघातोपगमादेव सत्प्रतिपक्षजात्योश्च कोविशेषो व्याघाते येन पूर्वत्र
बाध्यबाधकयोर्द्वयोरप्याभासत्वमुत्तरत्र तूत्तरस्य परं तथोपेयतइति
गुरवः । यद्यपि हि प्रतिपक्षहेतुः साध्यान्तरसाधकइत्यस्ति तस्य
जात्युत्तरवैधर्म्म्यं तथापि त्वद्धेतुरसाधकः समबलप्रतिपक्षप्रतिहत-
त्वादित्यस्य दूषणत्वार्थमवश्यापेक्षस्य द्वारात्मव्याघातकत्वात् साक्षा-
द्दावश्योपस्थाप्यस्य द्वारेण वा स्वव्याघातकतायामुपयुक्तविशेषाभावात् ।
नच तत्रास्तामेव व्याघातः सत्प्रतिपक्षता तु निरवद्यैवेति शक्यं मन्तुं
यतः शब्दादेर्नित्यत्वमेकस्मादनित्यत्वञ्चापरस्मादनुमानात्तथा सति
किं न स्यात् तयोर्विरोधग्राहिणः प्रमाणस्य बलादिति चेन्न यथा

नित्यत्वमनित्यत्वमित्युभयमास्तामित्यापद्यते तथा विरुद्धत्वमविरुद्धत्वञ्चास्तामित्यपि ब्रुवतोऽस्मान् कथं वारयिष्यसि। स्यादप्येवं यदि सत्प्रतिपक्षत्वमेव तत्र दोषो न स्यादिति चेत् तर्हि मन्तव्यं प्रथमस्य हेतोः समानबलप्रतिपक्षहेतुप्रतिहतत्वादसाधकत्वमित्युक्तमावर्त्तते अनवस्थायाञ्च यस्यां यस्यां सत्तायामपरापरा सत्तापाद्या तस्यास्तस्याः प्रमाणेन सिद्धौ नानवस्थादोषः स्यात् असिद्धौ चाश्रयासिद्धविषयमापादनमिति। यदि चात्माश्रयादिषु सर्व्वत्र विशेषोऽयमभिधीयते प्रमाणसिद्धत्वात् तत्र तत्र तथापेयतइति तर्ह्यापादनस्थाने तथाभ्युपगमाय प्रमाणं नास्तीत्युक्तं भवति तथाच तत्र प्रमाणप्रश्नस्यावसरो न प्रसङ्गस्येति। अपरेपि विषयभेदात्तर्कभेदा आत्माश्रयादिवत् मन्तुमुचिताः तद्यथा अविनिगमः उत्सर्गः कल्पनागौरवलाघवे चानौचित्यञ्चेति। विकल्पे नान्वययोग्येनैकस्मिन्नभ्युपगते तदेकदेशान्वयनियमनिर्द्धारणाशक्यत्वमविनिगमः सत्प्रतिपक्षहेत्वोरिव निर्द्धारयितुमशक्यान्वययोः परस्परप्रतिक्षेपएव पर्य्यवसानात् नन्वन्यतरमादायापि प्रकृतस्योपपत्तिसम्भवेनाविनिगमस्य दोषत्वमेव अनुपपन्नं केवलं पुंसः तत्र यदि संशयः स्यात् सच किं न स्यादिति चेन्न भावानवबोधात् प्रमाणासम्भवेन क्वचिदपि विशेषः कथमभ्युपगन्तुं शक्यो यमादाय वस्तुगत्याप्येकस्यान्वयः स्यात्। नन्वेवं प्रमाणाभावएव दोषः स्यान्नाविनिगमइति चेन्न तस्याविनिगमोन्नेयत्वेनाविनिगमस्यैव प्रथमोपनतस्योपन्यासौचित्यात्। नन्वेवमनुमानेपि व्यक्त्यविनिगमोदोषः स्यादिति चेन्न अनेकव्यक्तीनामभ्युपगमसिद्ध्यभावात् सामान्योपसंहारस्यैकामेव अस्मिमाद्येषु सामर्थ्यात् अविनिगमस्य चानेकाभ्युपगमे सत्युपस्थानादिति बाऽदृष्टत्वेपक्षाबाऽदृष्टत्वं तथा दुर्बलस्याभ्युपगमानर्हत्वोत्सर्गः तद्यथा ज्ञानस्य जायतोज्ञानं प्रति प्रामाण्याप्रामाण्यनिर्द्धारकप्रमाणानुपनिपाताविशेषेपि विना बाधकमप्रामाण्यमभ्युपगच्छन्तं प्रति स्यात् नतु प्रामाण्यं यं तर्क

मेवालम्ब्याहुः। "तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता। अर्थान्यथात्वहेतूत्थदोषज्ञानादपोह्यते" इति।

प्रष्टव्योदाहरणञ्चैतदीश्वराभिसन्धौ वेदप्रामाण्ये तथा यथा सौगतोपि न विप्रतिपत्तुमर्हति। ननु बलदेककोटिकः संशय एवोत्सर्गः तत् कथं तर्कः स्यादिति चेन्न उत्सर्गस्य सम्भावनारूपत्वात् कार्यस्थित्यनुकूलतयावलम्ब्यत्वात् संशयस्य त्वनेवम्भावात् उत्सर्गस्यैककोटिनिविष्टत्वात् संशयस्य च कोटिद्वयावगाहित्वात् एतेन संशयस्यैका बलवती या कोटिः सैवोत्सर्ग इति निरस्तम्। निर्णयेपि संशयस्यैवं वस्तुनियतकारणजत्वरूपबलशालिनी कोटिः स्यात्। स्यादप्येवं यद्युत्सर्गवन्निर्णयेपि संशयानुस्मृतिः स्यादिति चेन्न उत्सर्गोदाहरणे उत्सर्गमाद्रियमाणैः संशयोच्छेदानुमतेरेव बाधाभावं सहकारिणमपेक्ष्योत्सर्गस्यार्थैकभाव एव प्रमाणीभवनात्। तस्मात् यथानवस्थादयो बाधा दूषणत्वं त्यजन्तस्तदभावे दूषणानि भवन्ति तथोत्सर्गोपि तथैवेति सुगमासुगमयोरसुगमदुर्बलत्वं कल्पनागौरवं दृष्टजातीयमवेक्ष्यादृष्टजातीयं दुःखेन प्रतीयते अल्पमपेक्ष्य च बह्वित्याद्यखिलज्ञानानुभवसिद्धमेतत् दर्शितञ्चेदं विविच्य ईश्वराभिसन्धौ यथा नैयायिकादिकं प्रति क्षित्यादिषु प्रतिकार्य्यं कर्तृणां भिन्नानामभ्युपगमापादके यथा च सौगतं प्रति प्रत्येकं कारणानां समर्थानामनेकसमानदेशकालानेकनीलादिव्यक्त्युत्पादके वेति दूषणानुकूलमिदं तद्व्यतिरेकेण कल्पनालाघवं साधनानुकूलं प्रामाणिकाव्यवहार्य्यत्वमसमाधेयजातीयमनौचित्यं वैजात्यनामकं तस्य भेदाः प्रश्नवैजात्यादयः। प्रश्नविषयमप्रमिण्वतां प्रष्टरि प्रश्नानौचित्यं प्रश्नवैजात्यं यथा अवस्तुनि विधिनिषेधयोः किमिच्छसीति पृच्छति प्रमाणव्यवहारिणि सौगते अतएवाचार्य्यैरनौचित्यापरनामकं वैजात्यं परस्य दोषं मनसि कृत्वैवं ब्रुवते अथ सचेतसां मूकतैवोचितेति। अपरे च न ह्यप्रतीते देवदत्ते स किं गौरः कृष्णो वेति वैजात्यं विना प्रश्नः स्यादिति। यदि चेदमनौचित्य

नाम दोषेणाभ्युपेयते तदानीमर्थान्तरस्यार्थान्तरेण परिहारात् तत् परम्परामालम्बितुकामः न केनास्या दोषेणार्थान्तरपरिहाराभासत्व वादिन्यर्थान्तरेणैव तत्परिहरणमनुचितमित्यतोऽन्ये न जीयेत अर्थान्तरनिग्रहतायां विप्रतिपन्नोऽपि प्रश्नपरम्परामालम्ब्य स्वभङ्गभयात् कथावसानमनिच्छन्तं कथं जयेत् न चानवस्थयेति वाच्यं यावदुत्तर मर्थान्तरेण परिहरतो प्रश्नान्तरेण वा द्वयोरप्यनवस्थासाम्यात् । "दोषं व्यक्तिविवेके स्वं कविलोके विलोचने। काव्यमीमांसिषु प्राप्त महिमा महिमाहत"।

ननु कथमत्र प्रामाणिकाव्यवहार्यत्वमिति पृष्टेन यदि मूकत्वमालम्ब्य तथात्वं वादिनि न व्युत्पाद्यते तदानीमप्रतिभा। अथ तथात्वं व्युत्पाद्यते प्रश्नार्थादेः प्रमाणाविषयत्वमुपन्यस्य तदात्यन्तासद्व्यवहार्यता स्वीकृतैव स्यादिति चेदत्र ब्रूवते मूकतैवात्र विजयायेति न चाप्रतिभैवं प्रसज्यते उत्तरस्याप्रतिपत्तिरुत्तरार्हस्येति तल्लक्षणविशेषणात् यदि चायं नियमो वादिनेष्यते यदा भ्रान्त्यैव तेन व्यवहर्त्तव्यमनुवादादन्यत्रेति तदा मध्यस्थोद्भाव्यत्वमस्य दोषस्योपेयतां मध्यस्थेन ह्युपन्यस्तप्रभावयापि यथा वादिप्रबोधनं क्रियते तथा यद्यप्रामाण्य मालम्ब्यापि क्रियेत तदा को दोषस्तस्य स्यात् तत्र विषये तथैव तेन वादिबोधनस्य शक्यत्वात् तस्मान्मध्यस्थं प्रत्युत्तरदानं स्वदोषपरिहाराय प्रतिवादिनापि वैजात्यलक्षणप्रदर्शनं कार्य्यं मध्यस्थं प्रति तस्याप्रमाणेनापि बोधने निर्दोषत्वात्। ननु वादिभ्यामेव वादिनि मध्यस्थेन वा तं प्रति वादिना वात्यन्तासद्विषयव्यवहारोपगमे कथं नासत्ख्यातिः स्वीकृता स्यात् किं न स्यात् विशिष्टरूपे सम्बन्धांशे वा सत्ख्यातेरन्यथाख्यातिवादिभिरप्युपगमात्। ननु वन्ध्यासुताच्छश विषाणं भिन्नमित्यादिषु व्यवहारतः कथं विशेष्ये विशेषणेऽपि च नासत्ख्यातिरभ्युपगन्तव्येति चेन्न असत्ख्यात्यनभ्युपगमस्य सत्ख्याति त्वाद्यागनियमविश्रान्तत्वात् असदपि सदुपश्लिष्टमेव प्रतिभासते ननु

केवलमसत्तयापि ख्यात्या समुल्लिख्यतइत्यन्यथाख्यातिवादिभिरिष्ट-
मानत्वात् वन्ध्यासुताद्यशविषाणां भिन्नमिति प्रतिपत्त्यापि हि भिन्न
मित्ययमंशः सामान्यतोऽन्यत्र दृष्टएव प्रतीयते केवलं भेदस्य सदा-
श्रयः प्रतियोगि चेति। यद्वस्तुतस्तदसदाश्रयः प्रतियोगि च तस्ये-
त्यन्यथा कृत्वा प्रतीयतइत्यन्यथाख्यातिरेवोपगता भवति यथा तु
विशिष्टमत्यन्तासदेव तथाश्रयः प्रतियोगिनी अत्यन्तासती एव कि-
मिति न प्रतिभासेतैतावतापि यथोक्तान्यथाख्यात्यनुल्लङ्घनादेव। न
चैवमसत्ख्यातिवादिनापि शक्यं वक्तुं केवलं सदेव प्रकाशतइत्यस्मात्
पक्षात् विपरीतं विशिष्टं सम्बन्धश्च क्वचित् विशेषणाद्यप्यत्यन्तासद्भ्रा-
न्त्योल्लिखितइत्येवंरूपा तावदसत्ख्यातिः परेणोपगतैव यदि तु सदपि
प्रकाशते किञ्चित् तत् किन्न प्रकाशतइति यतः परेण विकल्पः सर्व्वथा
वस्त्वनुल्लेखी केवलमलीकमुल्लिखन्नसत्ख्यात्यात्मा स्वीक्रियते यदि तु
यथोक्तमेव परोऽभ्युपगच्छति तदानीमनुमानप्रामाण्यादिवत् अत्रापि
विप्रतिपत्तिरेवेति। ननु सर्व्वथैवासत्ख्यातिरपि भवता मन्तव्यैव
तथाहि वन्ध्यासुतशशविषाणे कूर्म्मरोमैवेति वदतः शब्दादर्थः प्रती-
यते किं तदर्थमात्रमपि समुल्लेख्यं तत्प्रतीतेरिति चेन्न तत्रापि तादा-
त्म्यस्य सामान्यतोऽन्यत्र प्रतीतस्यैवासदुपहितस्य स्फुरणोपगमात्
प्रकारभेदवैशिष्ट्येन भिन्नयोरेकत्वं हि तादात्म्यं तच्चान्यत्राप्येव
तर्कसंशयाभ्यामप्रमाभ्यां जननेपि तत्तत्प्रमावत् मध्यस्थाद्यप्रमया प्रश्ना
नौचित्यादिप्रमोत्पादनाविरोधो बाधवत् भ्रमविषया तथाभावेपि
भ्रमस्याप्रमात्वपारमार्थिकतावत् प्रश्नस्य विषयासत्यत्वेपि प्रश्नानौ-
चित्यसत्यतोपपत्तिरेव एतेन भ्रान्तिजायाधियः प्रमात्वं तथाप्यदृष्ट-
चरमित्यपि परास्तप्रायमिति। एवमन्यत्राप्येवंविधोदाहरणं वाच्यं
नच कश्चिदुक्तप्रकारमन्यथाख्यातिसमाधानं नानुमन्तुं शक्नोति
अन्यथा कथमसत्ख्यातिवादिनोमतमपि जानीयात् अज्ञात्वा च स्वपर
मतवैचित्र्यं कथं वादे प्रवर्त्तेतेति तत्र ते सर्व्वेपि तर्काः प्रमाणविरोधे

वा प्रमाणाभावे वा निष्पीडिताः प्रविशन्तोन बाधासिद्धिभ्यां भिद्यन्ते पूर्व्वैरपि लोकसिद्धत्वात् व्यवहृताः केवलमस्माभिरेव तर्कपदव्यामभिषिक्ताः ततो न प्रबन्धेन निरस्यन्ते "विपक्षेऽपि सम्बद्धं स्वयं हेतुमसाम्प्रतमिति"।

ये च परैस्तर्कदोषाः षट् स्वीक्रियन्ते आश्रयासिद्धिरननुकूलत्वं मूलशैथिल्यमिष्टापादनं विपर्य्ययापर्य्यवसानं मिथोविरोधश्चेति सोऽयं तर्कस्य दोषविभागोनोपपद्यते व्याप्तिपक्षधर्म्मत्वयोः प्रतीतिमपेक्ष्य यथानुमानं जायते तथैव तर्कोऽपि इयान् परमनयोर्विशेषोयदनुमानं तयोः प्रमित्या जायते तर्कस्तयोरभ्युपगमात् ताभ्यां पराभ्युपगममात्रसिद्धाभ्यां भवति तेन विमृष्यमाणस्तर्कः पराभ्युपगममात्रप्रसादसिद्धपरिकरो नाश्रयासिद्धिमपि यावत् वास्तवीमनुरोद्धुमधिकरोति ततः प्रमित्यभ्युपगमनसिद्धिकृतवैचित्र्याश्रयात् भेदादन्यो यावान् यथा च हेत्वाभासविभागस्तद्वदेव तर्काभासविभागोऽपि न्याय्यः। तस्मादाश्रयासिद्धिमूलशैथिल्येष्टापादनान्यसिद्धिरेकैव दोषोऽनुमानवत् तत्रा प्रमितत्वावलम्बिनी इह त्वनभ्युपगमावलम्बिनीति विशेषः। मिथोविरोधश्च सत्प्रतिपक्षतैव विपर्य्ययापर्य्यवसानन्तु दोषएवापादनस्य न भवति यन्नाम विपर्य्ययापर्य्यवसानादापादनमेवात्मसाधनानुकूलं न भवति तदन्यदेव किमपि वाच्यं विरुद्धव्यभिचारास्त्वनुमानवत्तर्केऽपि दोषाः पृथग्वाच्याः। बाधउत्सर्गसम्भावनादेरन्यथानुकूलस्तर्कस्य समममपि दोषं तर्कस्यापत्तिसाम्यं नोपगच्छामः। स चोभाभ्यामभ्युपगतव्याप्येऽनभ्युपगतव्यापके प्रागेव दर्शितइत्यास्तां विस्तरइति।

एवम्प्रकाराणि तत्तल्लक्षणेषु खण्डनान्यूहनीयानि।

तदेतासु खण्डनयुक्तिषु कामपि स्थानान्तरस्थां केनापि प्रकारान्तरेणानीय तत्सदृशीमन्यां वा स्वयमूहित्वा परैर्विविच्यमानान्यपि पदार्थान्तराणि बुद्धिमता बाधनीयानि। अत्र चास्माभिर्दूषयितुं प्रक्रान्तेभ्यः परपक्षप्रकारेभ्योयदि प्रकारान्तरं कोऽपि स्वयमूहति

उक्तानां बाधकानां मध्ये क्वचित् स्वप्रज्ञया समादध्यात् तत्र च खण्डन वादिनः प्रस्तुता प्रतिक्रिया न स्फुरेत्तदा परेण प्रयुज्यमाने वाक्ये बहुपदात्मके कस्यचित् पदस्यार्थं खण्डयितुं खण्डनान्तरमवतार-णीयम् एवं तत्रापि परेण प्रश्नाश्रयणे पुनस्तथैव शाखान्तरेषु संक्रमणीयमिति खण्डनमये चक्रे सम्यगवधेयम् । तत्र शाखान्तर संक्रान्तावर्थान्तरं प्रसेत् अप्रस्तुतत्वाभावात् । न चैवं निर्व्वचनारम्भेऽन्य संक्रान्तावनौचिती स्यात् शब्दो नित्यः कृतकत्वादित्यादौ परेणोक्ते कृतकत्वादौ अप्रतिपत्तव्यत्वापत्तेरन्यतरासिद्ध्याद्युच्छेदापातात् । येन हि तन्निर्व्वाह्यते तदनिर्व्वचनीयतयापि निर्व्वाह्यानिर्व्वचनीयतैवेति तस्मात् ।

"तत्तुल्योऽहस्तदीयस्य योजनम् विषयान्तरे ।
प्रक्लृप्ता तस्य शेषे च त्रिधा भ्रमति मत्क्रियेति ॥"

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञम्मन्यमना हठेन पठितीमास्मिन् खलः खेलतु ।
श्रद्धाराद्धगुरुः श्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्तर्करसोर्म्मिमज्जनसुखेष्वासज्जनं सज्जनः ॥
ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्
यः साक्षात् कुरुते समाधिषु परब्रह्म प्रमोदार्णवम् ।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीहर्षस्य कवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥

इति श्रीहर्षकृतानिर्व्वचनीयसर्व्वस्वे खण्डनखण्डखाद्ये तुरीयः
सङ्कीर्णपरिच्छेदः समाप्तम् ।

---

# आत्मतत्त्वविवेकः

महामहोपाध्याय श्रीमदुदयनाचार्य्यविरचितः



गवर्णमेण्टसंस्थापितसंस्कृतपाठशालाध्यक्ष श्रीयुत रसमय
दत्त महोदयानामनुज्ञया



तत्रत्य न्यायशास्त्राध्यापक श्रीयुत जयनारायण तर्कपञ्चाननैः
परिशोधितः



श्रीमदनमोहन तर्कालङ्कारैः संस्कृतः



संस्कृत यन्त्रे मुद्रितः

कलिकाता

संवत् १९०६ ।

# आत्मतत्त्वविवेकः ।

स्वाम्यं यस्य निजं जगत्सु जनितेष्वादौ ततः पालनम्
व्युत्पत्तेः करणं हिताहितविधिव्यासङ्गसम्भावनम् ।
भूतोक्तिः सहजा कृपा निरुपधि र्यन्नन्तदर्थात्मक
तस्मै पूर्व्वगुरूत्तमाय जगतामीशाय पित्रे नमः ॥

इह खलु निसर्गप्रतिकूलस्वभावं सर्व्वजनसम्वेदनसिद्धं दुःखं जिहासवः सर्व्व एव तद्धानोपायमविद्वांसोऽनुसरन्तः सर्व्वाध्यात्मविदेकवाक्यतया तत्त्वज्ञानमेव तदुपायमाकर्णयन्ति न ततोऽन्यं प्रवियोग्यनुयोगितया आत्मैव तत्त्वतो ज्ञेयः । तथाहि यदि नैरात्म्यं यदि वात्मास्ति वस्तुभूत उभयथापि नैसर्गिकमात्मज्ञानमतत्त्वज्ञानमेवेत्यप्यैकवाक्यतैव वादिनाम् अत आत्मतत्त्वं विविच्यते ।

अत्र बाधकं भवदात्मनि क्षणभङ्गो वा बाह्यार्थभङ्गो वा गुणगुणिभेदभङ्गो वा अनुपलम्भो वा । तत्र न प्रथमः प्रमाणाभावात् यत् सत्तत् क्षणिकं यथा घटः संश्च विवादाध्यासितः शब्दादिरिति चेन्न प्रतिबन्धासिद्धेः । सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्म्मसंसर्गेण भेदसिद्धौ तत्सिद्धिरिति चेन्न विरुद्धधर्म्मसंसर्गासिद्धेः । प्रसङ्गविपर्य्ययाभ्यां तत्सिद्धिरिति चेन्न सामर्थ्यं हि करणत्वं वा तद्योग्यता वा । नाद्यः साध्याविशिष्टत्वप्रसङ्गात् । व्यावृत्तिभेदादयमदोष इति चेन्न तदनुपपत्तेः व्यावर्त्त्यभेदेन विरोधो हि तन्मूलं स च न तावन्मिथो

व्यावर्त्त्यप्रतिक्षेपात् गोत्वाश्वत्ववत् तथासति विरोधादन्यतरापाये बाधासिद्ध्योरन्यतरप्रसङ्गात्। नापि तदाक्षेपप्रतिक्षेपाभ्यां वृक्षत्व शिंशपात्ववत् परापरभावानभ्युपगमात्। अभ्युपगमे वा समर्थस्याप्य करणमसमर्थस्यापि वा करणं प्रसज्येत। नाप्युपाधिभेदात् कार्य्यत्वा नित्यत्ववत् तदभावात्। न च शब्दमात्रमुपाधिः पर्य्यायशब्दोच्छेद प्रसङ्गात्। नापि विकल्पभेदः स्वरूपकृतस्य तस्य व्यावृत्तिभेदकत्वे असमर्थव्यावृत्तेरपि भेदप्रसङ्गात् विषयकृतस्य तु तस्य भेदकत्वे परस्पराश्रयप्रसङ्गात् न च निर्निमित्त एवायं व्यावृत्तिभेदव्यवहारः अति प्रसङ्गादिति। नापि द्वितीयः सा हि सहकारिसाकल्यम्वा प्रातिस्विकी वा। न तावदाद्यः पक्षः सिद्धसाधनात् परानभ्युपगमेन हेत्वसिद्धेश्च यत्सहकारिसमवधानवत् तद्धि करोत्येव इति को नाम नाभ्युपैति यमुद्दिश्य साध्यते न चाकरणकाले सहकारिसमवधानवत्त्व मस्माभिरभ्युपेयते यतः प्रसङ्गः प्रवर्त्तेत। प्रातिस्विकी तु योग्यता अन्वयव्यतिरेकविषयीभूतं बीजत्वं वा स्यात् तदवान्तरजातिभेदो वा सहकारिवैकल्यप्रयुक्तकार्य्याभाववत्त्वम्वा। न तावदाद्यः अकुर्व्वतोपि बीजजातीयस्य प्रत्यक्षसिद्धत्वात् तत्रापि तत्राविप्रतिपत्तेः। नापि द्वितीयः तस्य कुर्व्वतोपि मयानभ्युपगमेन दृष्टान्तस्य साधनविकल-त्वात् कोपि नाम तथात्मा प्रमाणशून्यमभ्युपगच्छेत् स हि न तावत् प्रत्यक्षेणानुभूयते तथानवसायात् नाप्यनुमानेन लिङ्गाभावात्। यदि न कश्चिद्विशेषः कथं तर्हि करणाकरणे इति चेत् करणमाह वेत्ति परं किं जातिभेदरूपः सहकारिलाभालाभरूपो वेति नियामकं प्रमाणमनुसरन्तो न पश्यामः तथापि योऽयं सहकारिमध्यम-ध्यासीनो करणस्वभावोभावः स यदि प्रागप्यासीत् तदा प्रसङ्ग कुर्व्वाणो गोर्व्वाव्यापत्तेनाप्यपह्नवयितुं न शक्यते इति चेत् युक्त मेतत् यद्यकरणस्वभावत्वम् भावस्य प्रमाणगोचरः स्यात् तदेव कुतः सिद्धमिति नाधिगच्छामः। प्रसङ्गतद्विपर्य्ययाभ्यामिति चेत्

परस्पराश्रयप्रसङ्गात् एवं स्वभावत्वसिद्धौ हि तयोः प्रवृत्तिस्तत्
प्रवृत्तौ चैवं स्वभावत्वसिद्धिरिति। स्यादेतत् कार्य्यजन्मैव कस्मिन्नर्थे
प्रमाणं विलम्बकारिस्वभावानुवृत्तौ। कार्य्यानुत्पत्तिः सर्व्वदेति चेन्न
विलम्बकारिस्वभावस्य सर्व्वदैवाकरणे तत्त्वव्याघातात् ततश्च विलम्ब
कारीत्यस्य यावत्सहकार्य्यसन्निधानं तावन्न करोतीत्यर्थः। एवञ्च कार्य्यं
जन्म सामग्र्यां प्रमाणयितुं शक्यते न तु जातिभेदे सेतु किं यथानु-
भवं विलम्बकारिस्वभावाः परस्परं प्रत्यासन्नाः कार्य्यं कृतवन्तः किम्वा
यथा त्वत्परिकल्पनं क्षिप्रकारिस्वभावा इत्यत्र कर्म्मोपजननसजाग-
रूकमेवेति। नापि तृतीयः विरोधात् सहकार्य्यभावप्रयुक्तकार्य्या-
भाववांश्च सहकारिविरहे कार्य्यवांश्चेति व्याहतं तस्मात् यद् यदभाव
एव यन्न करोति तत् तत्सद्भावे तत्करोत्येव इति तु स्यात्। एवञ्च स्थैर्य्यं
सिद्धेरेव परं बीजं सर्व्वत्वमिति एतेन समर्थव्यवहारगोचरत्वं हेतु
रिति निरस्तं तादृग्व्यवहारगोचरस्यापि बीजस्याङ्कुराकरणदर्शनात्
नासौ मुख्यस्तद्व्यवहारः तस्य जननिमित्तकत्वात् अन्यथात्वनियम-
प्रसङ्गात् इति चेत् कीदृशं पुनर्जननं मुख्यसमर्थव्यवहारनिमित्तं
न तावत् अक्षेपकरणं तस्यासिद्धेः नियमस्य च सहकारिसाकल्ये
सत्येव करणं करणमेवेत्येवं स्वभावत्वेनाप्युपपत्तेः ततश्च जनन
निमित्त एवायं व्यवहारो न व्याप्तिसिद्धिरिति। स्यादेतत् एताव-
तापि भावस्य कः स्वभावः समर्थितो भवति नहि क्षेपाक्षेपाभ्यामन्यः
प्रकार इति चेन्न दूषणाभिधानसमये निश्चयाभावेनैव सन्दिग्धा
सिद्धिनिर्वाहे कथापूर्व्वरूपपर्य्यवसानात् उत्तरपक्षावसरे तु सोऽपि
न दुर्व्वचः तथाहि करणं प्रत्यविलम्ब इति कोऽर्थः किमुत्पत्तेरन-
न्तरमेव करणं सहकारिसमवधानानन्तरमेव वा विलम्ब इत्यपि
कोऽर्थः किं यावन्न सहकारिसमवधानं तावदकरणं सर्व्वथैवाकरणं
वा तत्र प्रथमचतुर्थयोः प्रमाणाभावादनिश्चयेऽपि द्वितीयतृतीययोः
प्रत्यक्षमेव प्रमाणं बीजजातीयस्य हि सहकारिसमवधानानन्तरमेव

कारणं कारणमेवेति प्रत्यक्षसिद्धमेव तथा सहकारिसमवधानरहित-
स्याकारणमित्यपि । अत्र च भवानपि विप्रतिपद्यतएव न प्रमाणसिद्ध
त्वात् विपर्य्यये बाधकाच्च । तथाहि यदि सहकारिविरहेऽकुर्व्वाणं
तत्समवधानेपि न कुर्य्यात् तज्जातीयमकारणमेव स्यात् समवधाना
समवधानयोरुभयोरप्यकरणात् । एवं तत्समवधानविरहेऽपि यदि
कुर्य्यात् सहकारिणो न कारणं स्युः तानन्तरेणापि करणात् । तथा
चानन्यथासिद्धान्वयव्यतिरेकवतामप्यकारणत्वे कार्य्यस्याकारणकत्व
प्रसङ्गः तथाच कादाचित्कत्वविहतिरिति । एवञ्च द्वितीयपक्षविव-
क्षायामक्षेपकारित्वमेव भावस्य स्वभावः तृतीयपक्षविवक्षायान्तु क्षेप
कारित्वमेव स्वरूपमिति नोभयप्रकारनिवृत्तिरिति । तथापि किम-
समर्थस्यैव सहकारिविरहः स्वरूपलाभानन्तरं कर्त्तुरेव वा सह-
कारिसमवधानम् अन्यथावेति किं नियामकमिति चेत् इदमुच्यते
कुसूलस्थस्याङ्कुरानुकूलः शिलाशकलात् कश्चिदस्ति विशेषो वा नवे-
न्नियमेनैकत्र प्रवृत्तिः अन्यस्मान्निवृत्तिस्तदर्थिनो न स्यात् परम्पर-
याङ्कुरप्रसवसमर्थबीजक्षणजननादस्त्येवेति चेत् कदा पुनः परम्पर-
यापि तथाभूतं करिष्यतीति तत्र सन्देहइति चेत् स पुनः किमाकारः
किं सहकारिषु समवहितेष्वपि करिष्यति न वेति उतासमवहिते-
ष्वपि तेषु करिष्यति न वेति । अथ यदा सहकारिसमवधानं तदैव
करिष्यत्येव परं कदा तेषां समवधानमिति सन्देहः । न तावत् पूर्वः
सामान्यतः कारणत्वावधारणे तस्यानवकाशात् अवकाशे वा कारण
त्वानवधारणात् । नापि द्वितीयः सहकारिणान्तत्त्वावधारणे तस्या
नवकाशात् अवकाशे वा तेषां तत्त्वानवधारणात् । तृतीये तु सर्वएव
तत्सन्तानान्तःपातिनोबीजक्षणाः समानशीलाः प्राप्नुवन्ति यत्र तत्र
सहकारिसमवधाने सति करणनियमात् सर्वत्र च सहकारिसमव-
धानासमवधानासम्भवात् । समर्थएव क्षणे क्षित्यादिसमवधानमिति
चेत् तत् किं असमर्थे सहकारिसमवधानमेव न समवधाने सत्यपि

वा तस्मान्न कार्य्यजन्म । नाद्यः शिलाशकलादावपि क्षितिसलिलतेजः पवनयोगदर्शनात् । न द्वितीयः शिलाशकलादिव कदाचित् सहकारि साकल्यवतोपि वीजादङ्कुरानुत्पत्तिप्रसङ्गात् । एवमपि स्यात् कोदोष इति चेन्न तावदिदमुपलब्धम् । आशङ्क्यतइति चेत् तत्समवधाने सत्यपि अकरणवत् तद्विरहे करणमप्याशङ्क्येत । आशङ्क्यतामिति चेत् तर्हि वीजविरहेप्याशङ्क्येत तथाच साध्वी प्रत्यक्षानुपलम्भपरिशुद्धिः । स्यादेतत् न वीजादीनां परस्परसमवधानवतामेव कार्य्यकरणमङ्गीक्रियतेत्याशङ्क्यते येन समवधाननियमात् सर्वेषामेव तज्जातीयानामेकरसतानिश्चयः स्यात् नापि यत्र तत्र समर्थात्मत्वमङ्गीक्रियते येन विकलेभ्योपि कदाचित् कार्य्यजन्मसम्भावनायां प्रत्यक्षमुपलम्भविरोधः स्यात् । किन्नाम वीजादिष्वसमवहितेष्ववान्तरजातिविशेषमाश्रित्यापि कार्य्यजन्म सम्भाव्यतइति न दृष्टसमवधानमात्रेणैवोपपत्तौ तत्कल्पनायां प्रमाणाभावात् कल्पनागौरवप्रसङ्गप्रतिहतत्वात् अतीन्द्रियेन्द्रियादिविलोपप्रसङ्गात् विकल्पानुपपत्तेः विशेषस्य विशेषं प्रतिप्रयोजकत्वाच्चेति । तथाहि उत्पत्तेरारभ्य मुद्गरप्रहारपर्य्यन्तं घटस्तावत् जात्यन्तरानाक्रान्तएवानुभूयमानः क्रमवत् सहकारिवैचित्र्यात् कार्य्यकोटीः सहपाविर्भूताः करोति तत्रैतावतैव सर्वस्मिन् समञ्जसे अनुपलभ्यमानजातिकोटिकल्पना केन प्रमाणेन केन वोपयोगेन येन कल्पनागौरवप्रसङ्गदोषो न स्यात् योह्यदर्थं कल्प्यते तस्यान्यथा सिद्धेरेव तस्याभावइति भवानेवाह इति । दृष्टञ्च जातिभेदं तिरस्कृत्य स्वभावभेदकल्पनयैव कार्य्योत्पत्तौ सहकारिणोपि दृष्टत्वात् कथञ्चित् स्वीक्रियन्ते अतीन्द्रियेन्द्रियादिकल्पना तु विलीयेत मानाभावात् विकल्पानुपपत्तेः स खलु जातिविशेषः शालित्वस्य संग्राहकोवा स्यात् प्रतिक्षेपकोवा । आद्ये कुशूलस्थस्यापि शालेः कथं न तद्रूपवत्त्वं द्वितीये त्वभिमतस्यापि शालेः कथं तद्रूपवत्त्वम् । एवं शालित्वमपि तस्य संग्राहकं प्रतिक्षेपकम्वा आद्ये अशालेरतत्त्वप्रसङ्गः द्वितीये तु

शालेरेवानत्वप्रसङ्गः । न च नोभयमपीति वाच्यं विरोधाविरोधयोः प्रकारान्तराभावात् व्यक्तिभेदेन संग्रहप्रतिक्षेपावपि न विरुद्धाविति चेत् विलीनमिदानीं तदतज्जातीयताविरोधेन परिदृश्यमानकतिपय व्यक्तिप्रतिक्षेपेऽपि मिथः क्वचित्तुरगविहगयोरपि सम्भेदसम्भवात् । यच्च यस्य जातिविशेषः स चेतुं व्यभिचरेत् व्यभिचरेदपि शिंशपा पादपविशेषात् तथा च गतं स्वभावहेतुना । विपर्य्यये बाधकं विशेष इति चेन्न तस्येहापि सम्भवात् तदभावे स्वभावत्वानुपपत्तेः उपपत्तौ वा किं बाधकानुसरणव्यसनेनेति विशेषस्य विशेषं प्रति प्रयोजकत्वाच्च । तथाहि कार्य्यगतमङ्कुरत्वं प्रति वीजत्वस्याप्रयोजकत्वे अवीजादपि तदुत्पत्तिप्रसङ्गः । वीजस्य विशेषः कथमवीजे भविष्यतीति चेत् तर्हि शालेर्विशेषः कथमशालौ स्यादिति शालेरङ्कुरानुत्पत्तिप्रसङ्गः । अथ शालिवदवीजेऽप्यसौ भवतु विशेषः तथापि वीजत्वैकार्थसमवेत एवासावङ्कुरं प्रतिप्रयोजक इति चेन्न शालित्वव्यभिचारे शालित्वैकार्थसमवायवत् वीजत्वव्यभिचारे वीजत्वैकार्थसमवायेनापि नियन्तुमशक्यत्वात् अविशेषात् । तस्मात् यो यथाभूतो यथाभूतमात्मनोऽन्वयव्यतिरेकावनुकारयति तस्य तथाभूतस्यैव तथाभूते सामर्थ्यम् । तद्विशेषास्तु कार्य्यविशेषं प्रयोजयन्ति शाल्यादिर्वादिति युक्तमुत्पश्यामः ।

कस्य पुनः प्रमाणस्यायम् व्यापारक्रम इति चेत् तदुत्पत्तिनिश्चयहेतोः प्रत्यक्षानुपलम्भस्येति ब्रूमः । अथ न्यायेन विना न मे परितोषः । शृणु तमपि । यद्यथा यदङ्कुरं प्रत्यप्रयोजकं न तद्वीजजातीयं यथा शिलाशकलम् अङ्कुरं प्रत्यप्रयोजकञ्च कुसूलनिहितं वीजमभ्युपेतं परैरिति व्यापकानुपलब्धिः प्रसङ्गहेतुः । विपर्य्ययेऽपि किम्बाधकमिति चेत् अङ्कुरस्य जातिप्रतिनियमाकस्मिकत्वप्रसङ्ग इत्युक्तं वीजत्वं तस्य प्रत्यक्षसिद्धमशक्यापह्नवमिति चेदस्तु तर्हि विपर्य्ययः यद्वीजं तदङ्कुरं प्रतिप्रयोजकं

वपान्त्यसामग्री मध्यमध्यासीनं बीजं बीजत्वेदं विवादास्पदमिति स्वभावहेतुः। अङ्कुरस्य हि जातिप्रतिनियमो न तावन्निर्निमित्तः सार्वत्रिकत्वप्रसङ्गात् नाप्यन्यनिमित्तः तथाभूतस्य तस्याभावात्। सेयं निमित्तवत्ता विपक्षाद्व्यावर्त्तमाना स्वव्याप्यमादाय बीजप्रयोजकताया मेव विश्राम्यतीति प्रतिबन्धसिद्धिः। अथवा कृतमङ्कुरग्रहेण बीजस्वभावत्वं क्वचित् कार्य्ये प्रयोजकं न वा। न चेत् तत्स्वभावं बीजं तेन रूपेण क्वचिदप्यनुपयोगात् एवञ्च प्रत्यक्षसिद्धं बीजस्वभावत्वं नास्ति सर्वप्रमाणागोचरस्तु विशेषोऽस्तीति विशुद्धा बुद्धिः क्वचिदुपयोगेऽप्येकस्य तेन रूपेण सर्वेषामविशेषस्तादृप्यात् तथा च कथं किञ्चिदेव बीजं स्वकार्य्यं कुर्य्यात् नापराणि न च वक्तुमर्हं तत्कार्य्यं अबीजात्तदनुत्पत्तिप्रसङ्गात् नापि बीजमात्रम् अङ्कुरकारिणोऽपि तदुत्पत्तिप्रसङ्गात् नाप्यङ्कुराद्यन्यतममात्रम् प्रागपि तदुत्पत्तिप्रसङ्गात्। यदा यदुत्पन्नं सत् यत्कार्य्यानुकूलसहकारिमध्यमधिशेते तदा तदेव कार्य्यं प्रति तस्य प्रयोजकत्वमिति चेत् तत् किमवान्तरजातिभेदमुपादाय बीजस्वभावेनैव वा। आद्ये स एव जातिभेदः प्रयोजकः किमायातं बीजत्वस्य द्वितीये तु समानधर्माणामपि सहकारिवैकल्यादकरणमित्यायातं तत्तत्सहकारिसान्निध्ये सति तत्तत्कार्य्ये प्रयोजकस्य बीजस्वभावस्य सर्वसाधारणत्वादिति। अत्रापि प्रयोगः यद्येन रूपेणार्थक्रियासु नोपयुज्यते न तत्तद्रूपं यथा बीजं कुञ्जरत्वेन किञ्चिदप्यकुर्वन्न कुञ्जरस्वरूपं तथा च शाल्यादयः सामग्रीप्रविष्टा बीजत्वेनार्थक्रियासु नोपयुज्यन्त इति व्यापकानुपलब्धिः प्रसङ्गहेतुः तद्रूपताया अर्थक्रियाम्प्रति योग्यतया व्याप्तत्वात् अन्यथातिप्रसङ्गात्। तद्रूपत्वमेतस्य प्रत्यक्षसिद्धत्वादव्यापकत्वमिति चेत् अस्तु तर्हि विपर्य्ययः यद्यद्रूपं तत्तेनार्थक्रियासूपयुज्यते यथा स्वभावेन सामग्रीनिविष्टाभावा बीजरूपाश्चैते कुसूलस्थादय इति स्वभावहेतुः तद्रूपश्च कार्यानुबन्धित्वाद्योग्यतायाः। अत्रापि किञ्चित् कार्य्यं न च बीजत्वेन

बीजमुपयुज्यते इति बीजानुभवएवासाधारणं कार्य्यं यत्र बीजत्वं प्रयोजकं तच्च सर्वस्माद्बीजाद्भवतीति किमनुपपन्नमिति चेन्न योगिनस्तदनुभवस्य तदन्तरेणाप्युपपत्तेः। लौकिकइति चेन्न सत्यमेतत् नत्विदमवश्यं सर्वस्माद्बीजाद्भवति इन्द्रियादिप्रत्यासत्तेरसदातनत्वात् असार्वत्रिकत्वाच्च। ततश्च योग्यमपि सहकार्य्यसन्निधेर्न करोतीति सिद्धं कार्य्यान्तरमेवातीन्द्रियं सर्वबीजाव्यभिचारि भविष्यतीति चेत् तन्न तावदुपादेयम् अमूर्त्तस्य मूर्त्तानुपादेयत्वात् परिदृश्यमानमूर्त्तघटितत्तया मूर्त्तान्तरस्य तद्देशस्यानुपपत्तेः नापि सहकार्य्यं मिथः सहकारिणामव्यभिचारानुपपत्तेः। अपिचैवं सति प्रयोजकस्वभावो नान्वयव्यतिरेकगोचरः तद्गोचरस्तु न प्रयोजकः दृश्यं कार्य्यं जातमदृश्येनैव स्वभावेन क्रियते दृश्येन त्वदृश्यमेवेति सोऽयं यो ध्रुवाणीत्यस्य विषयः। अथवा व्यतिरेकेण प्रयोगः विवादाध्यासितं बीजं सहकारिवैकल्यप्रयुक्ताङ्कुरादिकार्य्यवैकल्यं तदुत्पत्तिनिश्चयविषयीभूतबीजजातीयत्वात्। यत् पुनः सहकारिवैकल्यप्रयुक्ताङ्कुरादिकार्य्यवैकल्यं न भवति न तदेवम्भूतबीजजातीयं यथा शिलाशकलमिति। नच किमुक्तसाध्यव्यावृत्तेरुक्तसाधनव्यावृत्तिरुदाहृता किम्वा परम्परयापि तथाविधप्रसवसाम[illegible]विरहादिति व्यतिरेकसन्देहइति वाच्यं प्रागेव क्षणिकबीजस्य निराकृतत्वादिति। स्यादेतत् माभूत् सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्म्मसंसर्गः अस्तु बीजत्वमेव प्रयोजकं भवतु च सहकारिसमवधाने कर्त्तृस्वभावत्वं भावस्य तथाच तदसन्निधाने ऽकरणमप्युपपद्यतां तथापि तज्जातीयमात्रएवेयं व्यवस्था नत्वेकस्यां व्यक्तौ करणाकरणलक्षणविरुद्धधर्म्मसंसर्गस्य प्रत्यक्षसिद्धतया तत्र दुर्वारत्वादिति चेन्न विरोधस्वरूपानवधारणात् स खलु धर्म्मयोः परस्पराभावरूपत्वं वा स्यान्नित्यत्वानित्यत्ववत्। धर्म्मिणि तदापादकत्वम्वा शीतोष्णत्ववत् तद्वत्ता वा दरिद्रत्वकुण्डलित्ववत्। न प्रथमः निर्विशेषणस्यासिद्धत्वात् यावत् सत्त्वं किञ्चित्

करणात् सविशेषणस्य तु विरोधसिद्धावप्यध्यासानुपपत्तेः । यदा
यदकरणं हि तदा तत्करणस्याभावो नत्वन्यदा तत्करणस्य नचानयो
रेकधर्म्मिसमावेशमातिष्ठामहे । न द्वितीयः भावाभावातिरिक्तयोः
करणाकरणयोरसिद्धेः । व्यापारापरव्यपदेशसहकारिभावाभावौ
हि करणाकरणे कार्य्यभावाभावौ वा अतिरेकसिद्धावपि स्वकाल एव
स्वाभावप्रतिक्षेपवत् अकरणीभावमाक्षिपेत् करणं न त्वन्यदा नहि
यो यदा नास्ति स तदा स्वाभावं प्रतिक्षेप्तुमर्हति विरोधाभावं वा
उत्क्षेप्तुं तथा सति न कदापि तन्न स्यात् न च कदापि तद्विरोधी भवे
दिति "नासतो विद्यते भावो नाभावो विद्यते सतः" इत्यायातं न वा
विरोधः । नन्वेवं सति परिमाणभेदोपि कालभेदेन न विरुध्यत
तत्राप्येवं वक्तुं सुकरत्वात् न बाधकबलेन तत्र कालभेदस्य विवक्षित
त्वात् तथाहि नारब्धद्रव्यैरेवावयवै र्द्रव्यान्तरमारभ्यते मूर्त्तत्वसमान
देशत्वयोरेकदा विरोधात् तथाचारम्भपक्षे पूर्व्वद्रव्यनिवृत्तिः अनि-
वृत्तावनारम्भ इति । तत्र निवृत्तावाश्रयभेदादेव परिमाणभेदः अनि-
वृत्तौ संयोगिद्रव्यान्तरानुपचये क परिमाणभेदोपलम्भो यो विरोध
मावहेत् । तदुपचये तु क परिमाणान्तरोत्पत्तिः आश्रयानुत्पत्तेः ।
अतएव स्थौल्यातिशयप्रत्ययोपि तत्र भ्रान्तः । तस्मात् कालभेदेनापि
न परिमाणभेद एकस्मिन् धर्म्मिण्युपसंहर्त्तुं शक्यत इत्यादि पदार्थ
चिन्ताचतुरैः सह चिन्तनीयम् । अस्तु तर्हीहापि बाधकं बलं
प्रसङ्गतद्विपर्य्ययोरवकाशादिति चेन्न तयोः सामर्थ्यासामर्थ्यविषय-
त्वात् तत्र च उक्तत्वात् आस्तां वा तथापि न ताभ्यां शक्ताशक्तयो
रविवक्षितत्वात् कालभेद एव विरोधः साध्यते तयोरुपसंहर्त्तुं शक्य-
त्वात् यदा तदेत्युपेक्ष्य यत् समर्थं तत्करोत्येवेति शक्यमिति चेन्न काल
नियमाविवक्षायां यत् समर्थं तत्करोत्येवेति कदाचित् स्यात् तथाच
सम्भवविधेरत्यन्तायोगोविरुद्धो नत्वयोगः नीलं सरोजं भवत्येवेति-
वत् । ननु यदसमर्थं प्रथममासीत् तस्य सामर्थ्यं पश्चादपि कुत आ-

गतं प्रथमं समर्थस्य वा पश्चात् कुत्र गतम्। नैतदेवं तत्तत्सहकारिमत
त्तत्कारकत्वं हि सामर्थ्यम् अतद्वतस्तदन्यवतो वा तदकर्तृत्वमसाम-
र्थ्यम् इदञ्चोत्पत्तिकमस्य रूपं ते च सहकारिणः स्वोपसर्पणकारण
वशात् भिन्नकाला इत्यर्थात् कार्य्याणामपि भिन्नकालतेति तथाप्येक
कालस्थ एव भावो जातनष्टः सदा तदा तत्कार्य्यं करोतु उत्पन्नमात्रस्य
तत्स्वभावत्वात् एकदेशस्थवदिति चेत् सोऽयमेककालस्थता स्वरूपा-
पेक्षया सहकारिसान्निध्यापेक्षया वा। आद्ये न किञ्चिदनुपपन्नं नित्या
नामप्येवंरूपत्वात् वर्त्तमानैकस्वभावत्वात् सर्व्वभावानाम्। तदेव तु
क्वचित् सावधि क्वचिन्निरवधीति विशेषः। सावधित्वेपि व्यापारफल
प्रवाहप्रकर्षापकर्षाभ्यामविशेषः। द्वितीयस्तु स्यादपि यदि तेषां योग
पद्यं भवेत् क्रमिणस्तु सहकारिण इत्युक्तं सहकारिसहितः स्वभावेन
करोतीति क्रमारि तु जातनष्ट एव करोत्वित्युत्तरप्रसङ्गो निरर्गल
एवावस्थेत्यलमनेन। तस्मात् कार्य्यस्य स एव कालः कारणस्य तु स चान्य
श्चेति सम्बन्धिकालापेक्षया पूर्व्वकालताव्यवहारः। अपि च यदा तदेति
स्थाने यत्र तत्रेति प्रक्षिप्य तयोरेव प्रसङ्गतद्विपर्य्ययोः को दोषः न
कश्चिदिति चेत्तर्हि देशाद्वैतं वा कारणभेदो वा आपद्येत आपद्यतां
तदादाय योगाचारनयनगरं प्रवेक्ष्याम इति चेन्न हेतुफलभाववाद
वैरिणमनपोद्य तत्र प्रवेष्टुमशक्यत्वात् तदपवादे वा सत्त्वाख्यसाधन
शस्त्रसन्नद्धासिनस्तव बहिर्व्वादसंग्रामभूमावपि कुतो भयम्। ननु
यावत्योऽर्थक्रिया भिन्नदेशाश्चावच्छेदं कारणमस्तु को विरोध इति चेन्न
तेषामपि प्रत्येकं तत्प्रसङ्गस्य तदवस्थत्वात् एवमेकस्य जगति वस्तुत-
त्वस्यालाभे साध्वी क्षणभङ्गसाधनपरिशुद्धिः। अस्तु तर्हि कश्चि-
द्दोष एवानयोरिति चेत् स पुनः कस्मिन् साध्ये किं सामर्थ्यासाम-
र्थ्ययोः किम्वा तद्विरुद्धधर्म्माध्यासेन भेदे आहोस्वित् प्रसङ्गप्रसङ्गा
र्विरोधे। नाद्यः सर्व्वत्र सामर्थ्ये प्रसह्यकरणात् सर्व्वत्राशक्तौ क्वचि-
दप्यकरणात् सर्व्वदेशवर्त्तमानस्वभावत्वेऽप्यस्य स्वोपादानदेश एव तत्तत्

कार्य्यं करोतीति अयमस्य स्वभावः स्वकारणादायातो न नियोग-पर्य्यनुयोगावर्हतीति चेत्तर्हि सर्व्वकालसमानस्वभावत्वेपि तत्तत्सह-कारिलाभ एव करोतीत्ययमस्य स्वभावः स्वकारणादायात इति किन्न रोचयेः । न द्वितीयः विरुद्धधर्म्माध्यासेनाप्यभेदे भेदव्यवहारस्य निर्निमित्तकत्वप्रसङ्गात् अनैकान्तिकश्च हेतुः कालत्वेपि न भेदं साधयेत् । न तृतीयः विरोधलक्षणायोगे बाधकसहस्रेणापि वि-रोधस्यापनेतुमशक्यत्वात् अयोगे वा तदेव चिन्त्यम् । यद्विधाने यस्य निषेधो यन्निषेधे वा यस्य विधानं तयोरेकत्र धर्म्मिणि पर-स्परापरीहारस्थिततया विरोधः स चेह नास्ति तद्देशकार्य्यकारित्वं हि तद्देशकार्य्याकारित्वेन विरुद्धं तद्विधौ तस्य नियमेन निषेधात् न पुनर्देशान्तरे तत्कार्य्याकारित्वेन तस्यानिषेधात् नह्यन्यत्र तद-करणमतत्करणं वा तत्र तत्करणस्याभावोऽपि तु तत्र तदकरणमिति चेत् हन्तैवम्भूतविरोधलक्षणाव्याप्तिर्भिन्नकालशक्त्यशक्त्योरपीत्युक्त-प्रायं तत्प्रतिसन्धीयाः ।

तस्मात् प्रसङ्गतद्विपर्य्ययस्थितावपि असिद्धो विरुद्धधर्म्मसंसर्गः । ननु यदेकदा यत् करोति तद्यावत् सत्त्वं तत्करोत्येव यथा कश्चिच्छब्दः शब्दान्तरमिति प्रसङ्गोऽस्तु विपर्य्ययस्तु यदेकदा यन्न करोति तत् सर्व्वदैव तन्न करोति यथा शिलाशकलम् अङ्कुरम् । न करोति चैकदा कुशूलस्थं वीजमङ्कुरमिति चेत् तदेतज्जात्यभिप्रायेण वा स्यात् व्यक्त्यभिप्रायेण वा स्यात् । प्रथमे द्वयमपि अनैकान्तिकम् अनियम-दर्शनात् द्वितीये द्वयमप्यन्यथासिद्धं एकान्तासामर्थ्यप्रयुक्तत्वादत्यन्ता-करणस्य सामर्थ्ये सति सहकारिसन्निधिप्रयुक्तत्वात् करणनियमस्य । एतेन यद्यत्करोति तत्तदुत्पन्नमात्रं यथा कर्म्म विभागं यदुत्पन्नमात्रं यन्न करोति तन्न कदाचिदपि यथा शिलाशकलमङ्कुरमिति निरस्तम् अत्रापि पूर्व्ववदनैकान्तान्यथासिद्धी दोषाविति । नापि तृतीयः कृत-कत्वानित्यत्वादेरपि परस्पराभाववत्तामात्रेणैव विरोधप्रसङ्गादिति ।

यदि च व्यवहारस्वीकारे विरोधपरीहारः स्यात् असता लौकिकतापि न त्वेवं न खलु सकलव्यवहाराभाजनत्वं तन्निषेधव्यवहारभाजनत्वञ्चेति वचनं परस्परमविरोधि। विधिव्यवहारमात्राभिप्रायेणाभाजनत्ववादे कुतो विरोध इति चेत् हन्त सकलविधिनिषेधव्यवहाराभाजनत्वेन किञ्चिद्व्यवह्रियते न वा उभयथापि स्ववचनविरोध उभयथाप्यवस्तुनैव तेन भवितव्यं वस्तुनः सर्वव्यवहारविरहानुपपत्तेः। नेतिपक्षे सकल विधिनिषेधव्यवहारविरहीत्यनेनैव व्यवहारेण विरोधात् अव्यवहृतस्य निषेद्धुमशक्यत्वात् व्यवह्रियत इतिपक्षे विषयस्वरूपपर्यालोचनयैव विरोधात् नहि सर्वव्यवहाराविषयश्च व्यवह्रियते चेति यदि चावस्तुनो निषेधव्यवहारगोचरत्वं विधिव्यवहारगोचरतापि किन्न स्यात् प्रमाणाभावस्योभयथापि तुल्यत्वादिति वन्ध्यासुतस्यावस्तुत्वेऽचेतनत्वादिकमेव प्रमाणं वस्तुत्वे तु न किञ्चिदिति चेन्न तथापि सुतत्वस्य विद्यमानत्वात् नहि वन्ध्यायाः सुतो न सुतः तथा सति स्ववचन विरोधात् वचनमात्रमेतत् न तु परमार्थतः सुत एवासाविति चेन्न अचैतन्यस्याप्येवंरूपत्वात् चेतनादन्यत् स्वभावान्तरमेव ह्यचेतनमुच्यते चैतन्यनिवृत्तिमात्रमेवेह विवक्षितं तच्च सम्भवत्येवेति चेन्न तथाप्यसुतत्वनिवृत्तिमात्रस्यैव विवक्षितत्वात् असुतत्वनिवृत्तिमात्रस्य स्वरूपेण कतिपयाकारसामर्थ्ये समर्थमर्थान्तरमवसेयमनन्तर्भाव्य कुतो हेतुत्वमिति चेन्न अचैतन्येऽप्यस्य न्यायस्य समानत्वात् व्यावृत्तिरूपमपि तदेव गमकं यदतस्मादेव यथा शिंशपात्वं वन्ध्यासुतत्वं सुतादिव घटादेः सुतादपि देवदत्तादेर्व्यावर्त्तते अतो न हेतुरिति चेन्न अचैतन्यमपि अस्यैवंरूपमेव नहि वन्ध्यासुतश्चेतनादिव देवदत्तादेरचेतनादपि काष्ठादेर्न व्यावर्त्तते। वस्तुत्वं वस्त्वेकनियतो धर्म्मः स कथमवस्तुनि साध्यो विरोधादिति चेन्न स पुनरयं विरोधः कुतः प्रमाणात् सिद्धः किं वस्तुत्वविविक्तस्यावस्तुनो नियमेनोपलम्भात् आहोस्विदवस्तुविविक्तस्य वस्तुत्वस्यानुपलम्भादिति न तावदवस्तु केनापि प्रमाणेनोपलम्भ

गोचरत्वपक्षे वा नावस्तुनाप्युत्तरः समानत्वात् । नहि वस्तुत्वमिव
अवस्तुत्वमपि वस्तु विविक्तं कस्यचित् प्रमाणस्य विषयः । तद्विविक्त
कल्पनमात्रं तावदस्तीति चेत् तद्वस्तुविकल्पनेपि को वारयिता
ननु वस्तुत्वं वचनं प्रति कर्तृत्वं तच्चायमवस्तुनि तस्य सर्वसामर्थ्य
विरहलक्षणत्वादिति चेत् अवस्तुत्वमपि कथं तत्र तस्य वचनेतर
कर्तृत्वलक्षणत्वादिति । सर्वसामर्थ्यविरहे वचनसामर्थ्यविरहो न
विरुद्धइति चेत् सर्वसामर्थ्यविरहो वन्ध्यासुतस्य कुतः प्रमाणात्
सिद्धः । अवस्तुत्वादेवेति चेत् नन्वेतदपि कुतः सिद्धं सर्वसामर्थ्यवि-
रहादिति चेत् सोऽयमितरेतरः केवलैर्वचनैर्निर्धनाधमर्णिकइव साधून्
भ्रामयन् परस्पराश्रयदोषमपि न पश्यति क्रमयौगपद्यविरहादिति
चेन्न तद्विरहसिद्धावपि प्रमाणानुयोगस्यानुवृत्तेः सुतत्वे च परामृश्य
माने तदविनाभूतसकलवस्तुत्वादिधर्मप्रसक्तौ कुतः क्रमयौगपद्यविरह
साधनस्यावकाशः कुतस्तरामवस्तुत्वसाधनस्य कुतस्तमामवस्तुत्व
साधनानां तस्मात् प्रमाणमेव सीमाव्यवहारनियमस्य तदतिक्रमेत्व-
नियमएवेति । नन्वप्रतीते देवदत्तादौ स किं गौरः श्यामोवेति वैयात्यं
विना प्रश्नः तथापि यद्येकोऽप्रतीतपरामर्शविषयएवोत्तरन्ददाति न
गौरइति अपरोपि किन्न दद्यान्न श्यामइति । नचैवं सति कस्यचिदर्थ
सिद्धिः प्रमाणाभावविरोधयोरुभयथापि तुल्यत्वादिति । नन्वप्रतीते
व्यवहाराभावइति युक्तं कूर्मरोमादयस्तु प्रतीयन्तएव नह्येते विकल्पा
किञ्चिदर्थभेदमनुल्लिखन्तएव उत्पद्यन्ते नच प्रमाणास्पदमेव व्यवहारा
स्पदमिति सत्यमुक्तं तथाहि शशविषाणमिति ज्ञानमन्यथाख्यातिर्वा
स्यात् असत्ख्यातिर्वा । न तावदाद्यस्ते रोचते तथासति किञ्चिदा-
रोप्यं किञ्चिदारोपविषयइति स्यात् तथाचारोपविषयस्यैवास्ति
आरोपणीयस्यान्यथैवेति जितं नैयायिकैः । नापि द्वितीयः कारणा-
नुपपत्तेः । इन्द्रियस्य ज्ञानजनने विषयाधिपत्येनैव व्यापारात् ।
लिङ्गशब्दाभासयोरप्यन्यथाख्यातिमात्रजनकत्वात् अपरिचितस्या-

थयोश्चासत्ख्यातिजनकत्वे शशविषाणादिशब्दात् कूर्म्मरोमादिविक-
ल्पानामप्युत्पत्तिप्रसङ्गात् नियामकाभावात् नहि सङ्केतो वा स्यात्
शब्दस्वाभाव्यं वा आद्यस्तावत् सङ्केतविषयाप्रतीतेरेव पराहतः तत
एव तत्प्रतीतावितरेतराश्रयत्वं पदशक्तिबलेनैव प्रतीतौ स्वार्थपरि-
त्यागः तथाचानन्विताः पदार्था एवान्विततया परिस्फुरन्तीति विपरीत
ख्यातिरेवावर्त्तते स्वार्थपरित्यागे तु पुनरप्यनियमः असामयिकार्थ
प्रत्यायनात् शब्दस्वाभाव्यात्तु नियमे व्युत्पन्नवदव्युत्पन्नस्यापि तथाविध
विकल्पोदयप्रसङ्गादिति वासनाविशेषादिति चेत् अथासदुल्लेखिनः
प्रत्ययस्य वासनैव कारणं उत वासनापि न तावदाद्यः शशविषाणादि
प्रत्ययानां सदातनत्वप्रसङ्गात् कदाचित् प्रबोधात् कदाचिदिति चेत्
प्रबोधोऽपि सहकार्य्यन्तरं वा अतिशयपरम्परापरिपाको वा आद्ये
वासनैवेति पक्षानुपपत्तिः द्वितीयेपि यद्यर्थान्तरप्रत्यासत्तेस्तदा पूर्ववत्
स्वसन्ततिमात्राधीनत्वे बाह्यवादव्याघातः नीलादिबुद्धीनामपि वासना
परिपाकादेवोत्पादात् वासनापीति पक्षे तु तदन्योपि हेतुः कश्चिद-
स्त्यः स च विचार्य्यमाणः पूर्वन्यायान्नातिवर्त्ततइति । नच शशविषा-
णादिशब्दानामसदर्थैः सह सम्बन्धावगमोपि तथाहि परबुद्धीनामनु-
ल्लेखात् तद्विषयस्याप्यनुल्लेखएव । नचार्थक्रियाविशेषोप्यस्ति यतो
विषयविशेषमुन्नीय तत्सङ्केतोगृह्यतां नच सङ्केतयितुरेव वचनात्तद-
वगतिः तद्विषयाणां सर्वेषां वचनानामप्रतीतविषयत्वेनागृहीतसमय-
तया अप्रतिपादकत्वात् । नच शशविषाणमुच्चारयतः कश्चिदभिप्रायो
ऽस्तइति तद्विषयोऽस्य वाच्यइति सुग्रहः समयइति वाच्यं तस्यैव
माकारःसमयग्रहः । गां बधानेत्युक्ते अप्रतीतशब्दार्थस्याभिप्रायमात्र
प्रतीतौ समयग्रहप्रसङ्गात् नच विशेषान्तरविनाकृतः कल्पनामात्र
विषयोऽस्य वाच्य इति साम्प्रतं घटकूर्म्मरोमादीनामपितदर्थत्वप्रस-
ङ्गात् । नच सर्वे प्रतिपत्तारः स्वस्ववासनयाऽसदर्थशब्दसम्बन्धप्रतिपत्ति
भाजइति साम्प्रतं परस्परवार्त्तानभिज्ञतया अपरार्थत्वप्रसङ्गात् नहि

स्वयङ्कृतसमयमग्राहयित्वापरोव्यवहारयितुं शक्यते नच व्यवहारोप-
दर्शनमन्तरेण ग्राहयितुमपि । नच गां बधानेतिवत् शशविषाणपदार्थे
व्यवहारः नचायमसावश्व इतिवदुपदेशः नच यथा गौस्तथा गवय
इतिवदुपलक्षणातिदेशः नचेह प्रभिन्नकमलोदरे मधूनि मधुकरः
पिबतीतिवत् प्रसिद्धपदसामानाधिकरण्यम् । तदमूः शशविषाणादि
कल्पनाः नासत्ख्यातिरूपाख्याते कारणाभावात् । मूकस्वप्नवदासां
व्यावहारिकत्वप्रसङ्गाच्च तस्मादन्यथाख्यातिरूपा एवेति नैतदनु-
रोधेनाप्यवस्तुनो निषेधव्यवहारगोचरत्वमिति भवतु वा सत्ख्याति-
स्तथापि न ततो व्यतिरेकः प्रामाणिकः ।

तथाहि कोऽयं व्यतिरेकोनाम यद्यतोव्यतिरिच्यते तस्य तथा-
भावोवा तदभावस्वभावत्वं वा । तत्र न तावत् क्रमयौगपद्ययोः
शशविषाणे स्वभावः प्रमाणगोचरः वृक्षरहितभूभृत्कटकवत्
क्रमयौगपद्यरहितस्य शशविषाणस्य प्रमाणाविषयत्वात् । नापि
क्रमयौगपद्याभावरूपत्वं शशविषाणस्य प्रामाणिकं घटाभाववच्च
शशविषाणस्य प्रमाणेनानुपलम्भात् घटाभावोपि न प्रमाणगोचर
इति चेन्न तद्विविक्ततरस्वभावस्य तस्य प्रमाणत एव सिद्धेः असिद्धौ वा
तत्राप्यव्यवहार एव । घटस्तावत् स्वाभावविरहस्वभावः प्रमाणसिद्धः
ताद्रूप्येण कदाचिदप्यनुपलम्भात् । एतावतैव तदभावोपि घटविरह
स्वभावः सिद्धइति चेन्न घटाभावस्य तदभावविरहस्वभावत्वानभ्युप-
गमात् नचान्यस्य स्वभावे प्रमाणगोचरे तदन्योऽपि सिद्धः स्यादिति
प्रसङ्गात् । एवम्भूतावेव घटतदभावौ यदेकस्य परिच्छित्तिरेवा पर-
स्परव्यावृत्तिरिति चेन्न घटवद्घटाभावस्यापि प्रामाणिकत्वानभ्युपगम
स्वभाववादानवकाशात् प्रमाणसिद्धे हि वस्तुनि स्वभाववादावलम्बनं
नतु स्वभाववादावलम्बनेनैव वस्तुसिद्धिरिति भवतामेव तत्र तत्र जय-
दुन्दुभिः । तत् किमिदानीं स्वाभावविरहस्वभावोघटः प्रमाणेनैव
सिद्धस्तत्र इत्यत्रा एवमेतत् घटो हि यादृक् तादृक्स्वभावस्तावत्

प्रमाणप्रथमवर्तीयं तस्य च यदि परमार्थतोऽभावोऽपि कश्चित् स्यात् परमार्थतः सोऽपि तद्विरहस्वभाव इति तथैव प्रमाणेनावेदितः स्यात् । न चैतदभ्युपगम्यते भवता तस्मात् घटवत् तदभावस्यापि प्रामाणिकत्वेनैवानयोः परस्परविरहरूपत्वव्यतिरेकसिद्धिः अप्रामाणिकत्वे त्वनयोरपि न तथाभाव इति प्रमेयत्वादिष्वपीयमेव गतिः ।

ननु काल्पनिकरूपसम्पत्तिरेवास्त्वनुमानाङ्गं तत्र तस्याः सर्व्वत्र सुलभत्वात् । ननु पक्षसपक्षविपक्षास्तावद्वस्त्ववस्तुभेदेन द्विरूपाः तत्र ये कल्पनोपनीतास्तेषु काल्पनिका एव पक्षधर्म्मतान्वयव्यतिरेकाः प्रमाणोपनीतेषु तु प्रामाणिका एवेति विभागः । तदिह काल्पनिकास्विरमे यद्यपि प्रमेयत्वादेर्व्याप्तिः काल्पनिकी सिद्धा तथापि प्रामाणिकजलह्रदादेः प्रामाणिक्येवेषितव्या सा च न सिद्धेति कुतस्तस्य हेतुत्वम् एवं प्रामाणिके शब्दे पक्षीकृते प्रामाणिक एव हेतुसद्भावो वक्तव्यः । न चासौ चाक्षुषत्वस्यास्तीति सोऽपि कथं हेतुः एवं कृतकत्वस्यापि वस्तुकनियतस्य धर्म्मस्य वास्तव एवान्वयो वक्तव्यः वस्तुनो विपक्षाच्च वास्तव एव व्यतिरेकः । न च तौ तस्य तत्कथमसावपि हेतुरिति प्रलपितमेतत् नहि नियामकमन्तरेण सम्पदं प्रति कल्पना त्वरते विपदम्प्रति तु विलम्बत इति प्रमाणं वस्तु तथा च निरग्निकमपि कूर्म्मरोम सधूममिति कल्पनामात्रेण विपक्षवृत्तित्वात् धूमोऽपि नाग्निं गमयेत् वास्तव्यां रूपसम्पत्तौ किमनेन काल्पनिकेन दोषेणेति चेत् तर्हि वास्तव्यामसम्पत्तौ किं काल्पनिकया तयेति समानं विरोधाविरोधौ विशेष इति चेत् कुत एव उभयोरेकत्र वस्तुवस्तुत्वादन्यथावस्तुत्वादिति चेत्तत् किं काल्पनिकोऽपि धूमो वस्तुभूतो येन कूर्म्मरोमत्वेन सह विरोधः स्यात् कल्पितवस्तुभूत इति चेत् निर्धूमत्वमपि कल्पितवस्तुभूतमेवेति तेनापि विरोध एव । तस्माद्यथा काल्पनिकी विपत्तिर्न दोषाय तथा काल्पनिकी सम्पत्तिरपि न गमकायेति व्यतिरेकभङ्गः ।

अस्तु तर्हि ध्रुवभावित्वेन विनाशस्याहेतुकत्वे सिद्धे क्षणभङ्गः न विकल्पानुपपत्तेः तद्धि तादात्म्यं वा निःस्वभावत्वं वा तत्कार्य्यत्वं वा तद्व्यापकत्वं वा अभावत्वमेव वेति। न पूर्व्वः निषेध्यनिषेधयोरैक्या-नुपपत्तेः उपपत्तौ वा विधस्य वैश्वरूप्यानुपपत्तेः। ननु कालान्तर कार्य्यक्रियां प्रत्यशक्तिरेवास्य नास्तिता सा च कालान्तर समर्थे-तरस्वभावत्वमेवेति चेत् नन्वयमेव क्षणभङ्ग स्तथा चासिद्धमसिद्धेन साधयतः कस्ते प्रतिबन्धः। अपि च देशान्तरकालान्तरानुवृ-त्तत्वस्य नास्तिता वक्तव्यमेव नूनमनन्तरमिदमुक्तं यदयमेव देशान्तर कालान्तरानुवृत्तीति यदि वा स्वदेशकालवत् कालान्तरदेशान्तरयो रपि नास्तितानुवृत्तेऽस्थिरत्वप्रसङ्गः अशक्तेः कथमस्तु शक्तेः सत्ता लक्षणत्वात् इति चेत् कालान्तरकार्य्यं प्रति स्वकालेऽशक्तिरसत्त्वं किम्बा स्वकार्य्यमपि प्रतिकालान्तरेऽशक्तिरसत्त्वम् आद्ये स्वकालेऽप्य सत्त्वप्रसङ्गः तदानीमपि तादृप्यात् कालान्तरकार्य्यं प्रत्येवमेतत् इति चेत् किमयं मन्त्रपाठः नहि योयदपेक्षः स तदपेक्षया नास्तीति व्यवह्रियते नहि रासभापेक्षया धूमो जगति नास्ति तत् कस्य हेतोः नष्टप्रसक्तस्य स्वरूपं निवर्त्तत इति। द्वितीये तु यदि कालान्तरा-धाराशक्तिः कथं तदात्मिका। तदाधारा चेत् तदैवासत्त्वप्रसङ्गः कालान्तरे तु विपर्य्ययः। तस्मात्।

विधिरात्मास्य भावस्य निषेधस्तु ततः परः।
सोऽपि चात्मेति कः प्रेक्षः स्वरूपमपि न वञ्चते॥

अस्तु तर्हि भावस्वरूपातिरिक्ता निवृत्तिर्नास्तीत्यस्य सोपाख्येति शेषः। नन्वयमपि क्षणभङ्गस्योद्धारः तत्र कपोतिकागुञ्जायितोऽवसंत भवतु वा निरुपाख्यरूपया तथाप्यहेतुकत्वे तस्याः किमायातम्। तुच्छस्य कीदृशं रूपमिति चेत् यादृशः कालदेशनियमः। सोऽपि तस्य कीदृश इति चेदेवं तर्हि न घटनिवृत्तिः क्वापि कदापि सर्व्वत्रैव सदैवेति स्यात्। भवतु प्रथममेवेति चेत् सोऽयं भावनास्तिता स्वरूपप्रतिषेधा

वा अभावप्रतिषेधेन निवृत्तिस्वरूपनिरुक्तिर्वेति । आद्ये भावस्यैव
सदातनत्वप्रसङ्गः द्वितीयेतु निवृत्तेरेवेति । अस्तु तर्हि कार्य्यत्वमेव
ध्रुवभावित्वं न तस्यापि कार्य्यइति पक्षे विरोधात् तस्यैव कार्य्यं
इत्यसिद्धेः । यत्किञ्चिदुत्पन्नमात्रस्य कार्य्यं सएव तस्य नाशइति चेत्
तर्हि यस्याः सामग्र्या यत् कार्य्यं तत्तदतिरिक्तानपेक्षमिति साधनार्थः
तमिमं कोनाम नानुमनुते कार्य्यमेव विनाशइति केनानुरोधेन व्यव-
हर्त्तव्यं किन्तद्विरहवत्त्वात् कार्य्यस्य किम्वा तद्विरहरूपत्वात् । न
तावत् पूर्व्वः सहकारिष्वपि तथाभावप्रसङ्गात् विरहस्वरूपानिरुक्ते-
श्च । न द्वितीयः सहि कार्य्यकाले कारणस्य योग्यानुपलम्भनियमा-
द्वा भवेत् व्यवहारानुरोधाद्वा अतिरिक्तविनाशबाधकानुरोधाद्वा ।
न प्रथमः उपलभ्यन्ते हि पटकाले वेमादयः । अभक्तेति चेत् किमत्र
प्रमाणम् । अभेदेपि किम्प्रमाणमिति चेत् माभूत्तावत् सन्देहस्थिता
वपि अनुपलब्धिरनवलम्बनविघ्नमिति । न द्वितीयः नहि पटोजात
इत्युक्ते तन्तवोनष्टा इति कश्चिद्व्यवहरति पटस्यानतिरेकात् तन्तुमात्र
जन्मनि भेदाग्रहादव्यवहारइति चेन्न तर्हि व्यवहारावलम्बनमपि
विसभागसन्ततौ । कथञ्चिद्व्यवहारावलम्बनमस्तीति चेत् नैतदेवं यदि
हि तन्तुनाशे च पटनिवृत्तिः । तर्हि कथं तदाश्रयस्तदात्मकोवा पटः
प्राक् अन्यैवासाविति चेन्न तावज्जातिकृतमन्यत्वमुपलभ्यते व्यक्ति
कृतन्तु नाद्यापि सिध्यति अतएव तत्सिद्धावितरेतराश्रयत्वं तथापि
यद्येवं स्यात् कोदृशोदोषइति चेत् न कश्चित् केवलप्रमाणाभावव्यव-
हारानुरोधश्च तदसिद्धावपि सिध्यतस्तस्य निमित्तान्तरापेक्षणात्
अपि च तन्तुविनाशः सामान्यतस्तन्तुविरहस्वभावो वा स्यात् तद्विप-
रीतो वा स्यात् आद्ये कथं तन्त्वन्तरं नहि सामान्यतो नीलमनील
विरुद्धत्वस्वभावमनीलान्तरं द्वितीये कथन्तद्विरोधी नहि नीलं
सामान्यतोपि नीलान्तरविरोधि । विशेषमात्रएवायं विरोधइति चेत्
तत् किं सामान्यतोऽनुभयस्वभावएव विनाशः । ओमिति ब्रुवतोऽन्य-

तदमुपादाय विनाशव्यवहारानुपपत्तिः । सामान्यस्यालीकत्वात् तत्र विरोधोऽपि किं करिष्यतीति चेत् विलीनमिदानीं विरुद्धधर्म्माध्यासेन भेदप्रत्याशया तस्य तदाश्रयत्वात् । अव्यतिरिक्ताभावपक्षे यथा पटः पटान्तराभाववांश्च तज्जातीयस्याभावो वा पटविरोधी पटान्तरसहवृत्तिश्चेति न कश्चिद्विरोधः तथा कार्य्याभावपक्षेपि भविष्यतीति नैतदेवं प्रतियोगिना हि तादात्म्यसम्बन्धैकजातीयत्वानि नेष्यन्ते अप्रतियोगित्वप्रसङ्गात् भिन्नकालत्वात् सामान्यतो विरुद्धधर्म्मसंसर्गाच्च अप्रतियोगिना तु संसर्गे को दोषः नहि भेदविजातीयत्वैककालताः संसर्गविरोधिन्यः तादात्म्यं हि संसर्गित्वे विरुद्धं विरोधित्वञ्च ते च नेष्येते एव । नापि बाधकानुरोध स्तदभावात् । ननु घटाभावे घटोऽस्ति नवा आद्ये घटवति तदभावः कपाले घटोऽस्तीति तान्यपि तद्वन्ति प्रसज्येरन् नास्तीति पक्षेऽनवस्थाप्रसङ्गः अभावान्तरमन्तरेण तत्र नास्तिताव्यवहारे भावान्तरेपि तथाप्रसङ्गः न भावान्तरस्य स्वजातीयत्वेनाविरुद्धसजातीयत्वात् विरुद्धजातीयस्य वा समानजातीयत्वानुपपत्तेः अन्यत्वमात्रेण तथाव्यवहारे तद्वत्यपिप्रसङ्गात् अभावस्य तु विरुद्धस्वभावतयैवाभावान्तरानुभवतर्कयोरभावादिति । भिन्नाभावजन्मनि घटताद्यवस्थात्र दोष इति चेन्न घटताद्यवस्थात्र हि यदि घटत्वमेव अभिमतमेव तत् नष्टाभावजन्मनि घटोऽघटतामुपैतीत्यभ्युपगच्छामः तत्कालसत्त्वचेन्न तस्य भावोजातः कालान्तरघटानवस्थानस्वभावएव हि तदभावः । अस्तु तर्हि निरुपादानत्वं बाधकं जन्मनउपादानव्याप्तत्वात् इति चेन्न धर्म्मिग्राहकप्रमाणबाधात् भावावच्छेदाच्च व्याप्तेः । एतेन निरुपादेयत्वं व्याख्यातं गुणादिसिद्धौ चानैकान्तिकत्वादिति ।

अस्तु तर्हि व्यापकत्वं ध्रुवभावित्वमिति चेन्न अतादात्म्यात् अतत्कारणत्वाच्च अकस्मिकादृष्ट्यापि व्याप्तिग्रहो न साहित्यनियमेन विरोधितया विषमसमयत्वात् नापि जन्मानन्तर्य्यनियमेन तद-

सिद्धेः सिद्धौ वा तत्रैव क्षणभङ्गसिद्धेः किमनेन भविष्यता-
मापेक्षा । व्यापकत्वमस्तीति चेदस्तु न त्वेतावता हेत्वन्तरानपेक्षत्व-
सिद्धिः अव्युत्पन्नघटस्य स्वकारणकपालमालयैवानैकान्त्यादिति । एतेन
सापेक्षत्वे व्यभिचारोऽपि स्यात् विनाशहेतूनां प्रतिबन्धवैकल्यसम्भ-
वादिति परास्तं कपालसन्ततितुल्ययोगक्षेमत्वात् विनाशस्येति ।
अस्तु तर्हि चरमः पक्षः कथं हि विनाशो न जायते अभावत्वात्
प्रागभाववत् जातोऽपि वा निवर्त्तेत जातत्वात् घटवदिति नैतदेवं
प्रागभावो जायते अभावत्वात् विनाशित्वाद्वा प्रध्वंसवत् घटवद्वा
अजातो वा न निवर्त्तेत अजातत्वात् आकाशवत् अविद्यावद्वेति-
वदसाधनत्वात् । किमेतेषां दूषणमिति चेत् भावावच्छिन्नव्याप्तिक-
त्वादप्रयोजकत्वं प्राक्प्रध्वंसाभावयोरुक्तप्रत्यक्षबाधः प्राक् पश्चाच्च
कार्य्योन्मज्जनप्रसङ्गलक्षणप्रतिकूलतर्कश्च । अथोन्मज्जने को दोष
इति चेत् कालविच्छेदप्रत्ययस्योभयात्मकत्वप्रसङ्गः अयथार्थत्वे तस्य
द्विचन्द्रदर्शनकाले चन्द्रैक्यविच्छेदवत् तद्वतः कालाविच्छेद भावस्य
प्राक् प्रध्वंससहवर्त्तित्वेनाविरोधप्रसङ्गात् यथार्थत्वे तु भेदसिद्धौ
तदुन्मज्जनानुपपत्तेः एतेन प्रागभावकाले प्रध्वंसोन्मज्जनं तत्काले
च प्रागभावोन्मज्जनमपास्तं भावयोरभावयोरपि उभयविरोधिस्व-
भावत्वादिति ।

कुतः पुनः स्थिरसिद्धिः प्रत्यभिज्ञानात् क्षणिकत्वानुपपत्तेश्च
लक्षणाभेदेन व्यभिचारिजातीयत्वात् प्रत्यभिज्ञा न प्रमाणमिति
चेन्न अवान्तरलक्षणभेदेनाव्यभिचारनियमात् । किन्तदिति चेत् वि-
रुद्धधर्मासंसृष्टविषयत्वं सिद्धञ्च तदत्र । एवम्भूतमपि कदाचिद्व्यभि-
चरेदिति चेन्न विरुद्धधर्मसंसर्गानाक्रान्तेऽप्येकत्वप्रत्ययस्य व्यभि-
चारे सर्व्वत्रैकत्वोच्छेदप्रसङ्गात् तथा चैकत्वमपि न स्यादिति भव
निष्किञ्चनः । तस्माद्भेदप्रयोजकानां विरुद्धधर्मसंसर्गः तदसंसर्गे
बाधकं भेदव्याप्तिरिति । भेदाभेदव्यवहारमर्य्यादानिबन्धनप्रदीप

कुड्यलेषु निपुणं निभालयन्तोऽपि न विरुद्धधर्म्मसंसर्गमीक्षामहे । अथ च प्रत्यभिज्ञानमवधूय तत्र भेद एव परं विधत्त इति चेत् कस्य प्रमाणस्य बलेन आश्रयनाशस्य उत्तराग्निनाशहेतुत्वेन विज्ञातत्वात् तस्य चात्र प्रतिक्षणमुपलब्धेः । वर्त्तितैलयोरुत्तरोत्तरमपचीयमान-त्वात् पूर्व्वस्य नाश उत्तरोत्पादश्च न्यायसिद्ध इति चेत् नन्वयं प्रत्य-नीकधर्म्मसंसर्ग एव नष्टत्वानष्टत्वयोराश्रयनाशानाशयोर्वा एकत्र तेज-स्यनुपपत्तेः । सोऽयं घृतं शिरश्छेदेऽपि न ददाति विंशतिपणकान्तु प्रयच्छतीति किमत्र ब्रूमः । भविष्यति तर्हीहापि विरुद्धसंसर्गो दुरूह इति चेत् अथ स एवायं स्फटिक इत्यत्र प्रमाणप्रतीतसंसर्गाणां विरोधश्चापह्नूयते तत्प्रतीतविरोधानां संसर्गः अथाप्रतीतस्वरूप वि-रोधसंसर्ग एव केचिद्विरुद्धतया संसृष्टतया वेति । न प्रथमः प्रागेव निराकृतत्वात् । न द्वितीयः योग्यानामनुपलम्भबाधितत्वात् अयो-ग्यानामपि कारणादिव्याप्यव्यापकविगमविलोकनव्यावर्त्तितत्वात् । न तृतीयः तस्यातिप्रसञ्जकतया सर्व्वैकत्वोच्छेदप्रसङ्गादिति । एतेन प्रत्यभिज्ञानादेव लक्षणाभासमात्रस्य अनुमानेन स्थैर्य्यसिद्धिः । तथाहि विवादाध्यासितभावः कालभेदेऽपि न भिद्यते तद्भेदेपि विरुद्ध धर्म्मा संसृष्टत्वात् यो यद्भेदेऽपि न विरुद्धधर्म्मसंसृष्टो नासौ तद्भेदेपि भिद्यते यथा प्रतिसम्बन्धिपरमाणुभेदेपि एकः परमाणुः तथाचायं विवादाध्यासितोभावः तस्मात् कालभेदेऽपि न भिद्यत इति । अत्र आत्मा न कश्चित् विप्रतिपद्यते पक्षधर्म्मता तु प्रसाधितैव क्षणिक-त्वानुपपत्तिस्त्वानुगतव्यवहारान्यथासिद्धेः प्रत्यक्षविकल्पा हि साधारणं रूपमनुपस्थापयन्तो न तदङ्गीकारेऽपि समर्थाः इत्यविवादं वाह्यार्थस्थितौ स्थिरास्थिरविचारात् । तथाणीकं वा आकारो वा वाह्यं वस्तु वेति त्रयः पक्षाः तत्र न प्रथमः तद्धि न तावदनुभवादेव तथा व्यवस्थाप्यं तस्यालीकत्वादुल्लेखात् तथात्वे वा प्रवृत्तिविरोधात् नह्यलीकमेव तत् इत्यनुभूयाप्यर्थक्रियार्थी प्रवर्त्तते अन्यनिवृत्ति

स्फुरणान्नैव दोष इति चेत् एतदेवासत् विधिरूपस्यैव स्फुरणात् । नहि शब्दलिङ्गाभ्यामिह महीधरोद्देशे अनग्निर्न भवतीति स्फुरण मपितु वह्निरस्तीति । यद्यपि निवृत्तिमहं प्रत्येमीति न विकल्पः तथापि निवृत्तिपदार्थोल्लेख एव निवृत्त्युल्लेखः । न ह्यनन्तर्भावितविशेषणा वि-शिष्टप्रतीतिर्नाम ततो यथा सामान्यमहं प्रत्येमीत्यनुव्यवसायाभावेऽपि साधारणाकारस्फुरणात् विकल्पधीः सामान्यबुद्धिः परेषां तथा निवृत्तप्रत्ययाद्विना निवृत्तिबुद्धिरलीकमिति चेत् हन्त साधारणा-कारपरिस्फुरणे विधिरूपतया यदि सामान्यबोधव्यवस्था किमायात मस्फुरदभावाकारे चेतसि निवृत्तिप्रतीतिव्यवस्थायाः । न ह्यगौः पाटेयमिति विकल्पः किन्तु गौरिति ततोऽन्यनिवृत्तिमहं प्रत्येमीत्येव माकाराभावेऽपि निवृत्त्याकारस्फुरणं यदि स्यात् कोऽनिवृत्तिप्रतीतिम-पह्नुवीत अन्यथात्वतत्प्रतिभानं तथेतिव्यवहृतिरिति गवाकारे चेतसि तुरगबोध इत्यस्तु । नच निवृत्तिमात्रप्रतिभासेऽपि प्रवृत्तिसम्भवः न ह्यघटो नास्तीत्येव घटार्थी प्रवर्त्तते अपि तु घटोऽस्तीति । अघट-स्यैव निवृत्तिरिति प्रतीतौ नायं दोष इति चेन्न घटनिवृत्त्यप्रतिक्षेपे नियमस्यैवासिद्धेः तत्प्रतिक्षेपे तु वस्तुतोऽन्यविधिर्निषेधप्रतिक्षेप स्यैव विधित्वात् । निवृत्तेरपरिस्फुरणे गां बधानेति देशितोऽश्वमपि बध्नीयात् इति चेन्न भवेदप्येवं यद्यश्वोऽपि गौः स्यात् किन्तु गौर्गौ रश्वोऽश्वति अन्यथा निवृत्तावपि कुतस्ते समाश्वास इति निवृत्त्यन्तरा पेक्षनवस्थानिवृत्त्यनिवृत्तितदधिकरणानां स्वरूपसाङ्कर्य्ये प्रवृत्ति-सङ्करः स्यात् स्वरूपभेदेनैव नियमे विधिमात्रप्रतिभासेऽपि तथा किन्न स्यात् । स्वरूपभेद एवान्यापोहोऽन्यापोढ़स्वरूपत्वाद्विधेरिति चेन्न अलीकपक्षे तदभावात् तस्य स्वरूपविरहेणालीकत्वप्रसङ्गात् स्व लक्षणस्य च विकल्पानारोहात् अपि च गां बधानेति देशितो गवि प्रवृत्तौ नाश्वे तदप्रतीतेः । यदा त्वश्वमुपलभ्यते तदा तत्र प्रवृत्त्यु-न्मुखोऽपि गोरभावं प्रतीत्यैव निवर्त्तत इति किमनुपपन्नम् । स्यादेतत्

नह्यनुभवमवधूय भवितुं क्षममिति को विधिस्फुरणमपह्नुताम् । तदुपसर्ज्जनीभूतस्तन्निषेधोऽपि स्फुरत्येव अन्यथा विधेरवच्छेदकत्वानुपपत्तेः । नह्यन्यतो विशेष्यमव्यावर्त्तयतो विशेषणत्वं नाम नचान्यतो व्यावर्त्तनं व्यवच्छित्तिप्रत्यायनादन्यत् ततो यथेन्दीवरपुण्डरीकादिशब्देभ्यो गुणीभूतनीलधवलादिविधिशेखरा प्रतीतिः तदन्यव्यवच्छेदस्तु तद्गर्भाभिप्रायमात्रास्तथा सर्व्वत्रेति चेत् अस्तु तावदेवं विधिस्तु स्फुरतीत्यत्र सम्प्रति नोऽनिर्बन्धः अन्यथावच्छेद्यावच्छेदकयोरप्रतीतेरवच्छित्तिरपि न स्यात् यथोत्पलादाविव नीलत्वाद्यप्रतीतौ । नच निषेध्यमस्पृशती प्रतीतिर्निषेधं स्प्रष्टुमर्हति तस्य तन्निरूपणाधीननिरूपणात्वात् । नच निषेधान्तरमेव निषेध्यमितरेतराश्रयप्रसङ्गात् । परानपेक्षनिरूपणे तु विधौ नायं दोष इति । ततः प्रतीतावितरेतराश्रयत्वमुक्तं सङ्केते सत्तार्थं यत्परिहृतं ज्ञानश्रिया तदेतत् ग्राम्यजनधर्म्मीकरणं गोबलादिवत् स्थानान्तरसञ्चारात् स्फुरतु विध्यलीकमिति चेन्न व्याघातात् किञ्चिदिति विध्यर्थो न किञ्चिदिति चालीकार्थः । अतद्रूपपरावृत्तिमात्रे चालीकत्वे स्वलक्षणस्याप्यलीकत्वप्रसङ्गात् । रूपमात्रपरावृत्तौ तु कथं विधिर्नाम विध्यंशस्यारोपितत्वादयमेव दोष इति चेन्न स्वलक्षणविधेर्विकल्पासंस्पर्शात् सामान्यविधेरनभ्युपगमात् परिशेषादलीकविधौ विरोधस्यैव स्थितेः । भेदाग्रहात् विधिव्यवहारमात्रमिति चेत् सम्भवेदप्येतत् यदि स्वलक्षणमपि विधित्वमपहाय स्फुरेत् यदि चालीकमपि निषेधरूपतां परिहृत्य प्रकाशेत नत्वेवमुभयोरपि निरंशतया प्रकारान्तरमुपादाय प्रथनात् अप्रथमानरूपासम्भवाच्च काल्पनिकस्यांशांशिभावस्यातएव मूलएव निहितः कुठारः । साधारणं रूपं विकल्पगोचरो नचालीकं तथा भवितुमर्हतीति । तस्यातिदेशकालानुगमो न स्वाभाविकस्तुच्छत्वात् न काल्पनिकस्तस्याः अविषयत्वात् नारोपितोऽप्यन्यथाप्यप्रसिद्धेः । भेदाग्रहादेकत्वमात्रमनुसन्धीयते इति चेन्न भाविकस्य भेदस्याभावात्

भावे वा काल्पनिकत्वस्य व्याघातात् परमार्थासतः परमार्थाभेद पर्य्यवसायित्वात् आरोपितस्याग्रहानुपपत्तेः अभेदारोपानवकाशाच्च आरोपितासत्त्वस्य परमार्थसत्त्वप्रसङ्गात् चतुःकोटिविनिर्मुक्तस्य चातिप्रसञ्जकत्वात् तदग्रहस्य नैरात्म्येऽपि सुलभत्वात्। अन्यत्र पारमार्थिकभेद प्रतीतौ अयमभेद आरोप्यतामिति चेत् एवन्तर्हि यस्य प्रतिभासे यन्नारोप्यते नियमेन तस्यैवाप्रकाशे तदारोप्यं न तु तन्नामकमात्रस्यातिप्रसञ्जकत्वात् अतएव न व्यधिकरणस्यापि सतोऽसतो वा भेदस्याग्रहो अभेदारोपोपयोगीति।

नापि न्यायादन्यापोहसिद्धिः तदभावात्। यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठं यथा अमूर्त्तत्वम् यथा स्वलक्षणानां सामान्यव्यवहारहेतुस्तदन्यव्यावृत्तिरूपमिति न्यायोऽत्र इति चेन्न कालात्ययापदेशात्। नहि प्रथमानस्य निष्ठान्यार्थसाध्यानामप्रथन शरीरन्तु चिन्तितमेवेति निष्फलः प्रयासः। यदा चानलीकएव ध्रुवं न्यायस्यानुभवाभासः तदा क्वैव कथालीके न हि तस्याप्रतीयमान मपि किञ्चिदस्ति यन्न्यायेन साध्यमित्युक्तम्। किञ्चेदं भावाभाव साधारण्यं न तावदुभयरूपत्वं विरोधात्। न तद्धर्म्मत्वमनभ्युपगमात् नहि गोत्वमभावस्यापि धर्म्म इत्यभ्युपगम्यते। न तद्धर्म्मित्वमनैकान्तात् व्यक्तिरपि भावाभावधर्म्मशालिनी न निषेधैकरूपेति। न तदुभय सादृश्य मसम्भवात् अतन्निवृत्त्यैव तथात्वे साध्याविशेषात्। नाप्यस्ति नास्तिसामानाधिकरण्यं विरोधात् अन्यथासिद्धेश्च। नहि यदस्ति तदेव नास्तीति प्रत्ययगोचरः स्यात्। प्रकारान्तरमाश्रित्य स्यादेवेति चेत् एवं तर्हि तमेव प्रकारभेदमुपादाय विधिव्यवस्थायां को विरोधो येन प्रतिबन्धः सिद्ध्येत। तस्य विधिव्यवस्थायामस्ति नाम किमधिक मुपनेयमिति चेत् निषेधरूपतायां नास्ति नाम किमधिकमुपनेयमिति समानम्। अतएव साधारण्यमिति चेत् तथापि किन्तदुभयात्मकत्वमुभयपरीहारो वेत्यशक्यमेतत्। तस्मादस्तिनास्तिभ्यामुपाख्यन्त-

दोषसम्प्राप्तिः प्रागेवोपाधिनियमो वेति सार्थकत्वं तयोः तदेवं विधावपि तुल्यम् । प्राप्ताशेषविशेषत्वादलीकपक्षे कोपाध्यन्तरविधिर्वा नियमो वेति विशेषदोषः । ततो गोशब्दो गोत्वविशिष्टव्यक्तिमात्राभिधायी पर्य्यवसितः तास्तु विप्रकीर्णदेशकालतया नार्थक्रियार्थि प्रार्थनामनुभवितुमीशत इति प्रतिपत्ता विशेषाकाङ्क्षः । सा च तदाकाङ्क्षावति गोष्ठे कालाक्षी धेनुः घटोध्नी महाघण्टा नन्दिनीत्यादिभिर्नियामकैर्विधायकैर्व्या निवार्य्यत इति विधौ न कश्चिद्दोषः । गोत्वविशिष्टसदसद्व्यक्तिमात्रप्रतीतेस्तदेवास्त्यादिपदप्रयोगवैफल्यमिति चेत् तावन्मात्रप्रतिपत्त्यर्थमेव तत् अनेकप्रतिपत्त्यर्थन्तु तदुपयोगः तस्य प्रागप्रतीतेरित्युक्तम् ।

यत्तु निपुणम्मन्यो विकल्पमेव पल्लवयति स यज्ज्ञानं यद्भावाभावसाधारणप्रतिभासं न तेन तस्य विषयत्वं यथा गोज्ञानं स्याद्येनेत्यादि तद्यदि गोविकल्पस्यास्तित्वविषयत्वमेव तद्भावाभावसाधारण्यं गव्यपि वाच्यं तथा ततः साध्याविशिष्टत्वम् । अथास्त्यादि विशेषाकाङ्क्षा तदासाधारण्यम् । तद्युदाहृतो गोविकल्पोऽस्त्यादि विशेषमाकाङ्क्षति नियमविधौ तु विरोध एव । न ह्यतद्विषयस्य तद्विशेषनियमाकाङ्क्षा नाम गोज्ञानस्यापि विशेषनियमाकाङ्क्षाप्रसङ्गात् । तदीयसदसत्त्वानुपदर्शनत्वेनाद्यदि स्वरूपमेव ततोऽसिद्धिदोषः । नहि गोविकल्पो गोस्वरूपमेव नोपदर्शयतीति मम कदापि सिद्धं तथाप्यन्यथापि उपाध्यन्तरञ्चेत् तदानैकान्तः । नहि योयस्योपाध्यन्तरं नोपदर्शयेत् नासौ तमपीति नियमः । ननु नियम एवं तथाहि यत्र यत्समवेतधर्म्मबोधनं तत्र तत्स्वरूपबोधनं यथा गोविकल्पशब्दौ तुरगे तथा तौ गव्यपि [illegible]मयेति व्यापकानुपलब्धिः । धर्म्मिबोधे हि धर्म्माणां कस्य[illegible]ः कस्यचिदबोध इत्युपकारभेदान्नियमः स्यात् उपकारभेदश्च शक्तिभेदाद्भवेत् नचैवं प्रकृते अनवस्थाप्रसङ्गात् । ततः शक्तेरभेदादुपकाराभेदे सर्व्वोपाधिसहितबोधोऽबोधो

वेति द्वयी गतिरिति प्रतिबन्धसिद्धिः । दुष्प्रयुक्तमेतत् उपाधितद्वतो भेदे प्रतिनियतसामग्रीबोध्यत्वादेव तदयौगपद्ये बोधाबोधोपपत्तेः । प्रतिनियतसामग्रीबोध्यत्वस्यापि स्वभाववैचित्र्यनिबन्धनत्वात् तस्यापि स्वकारणाधीनत्वात् तस्याप्यन्वयव्यतिरेकसिद्धत्वात् तस्यापि कार्य्यानेयत्वादिति । यच्चयाकारभेदादित्यादि तत्तदा शोभेत यदि धर्म्मिमात्राधीन उद्बोधमात्राधीनो वा तावन्मात्रबोधसामग्र्यधीनो वा यावदुपाधिबोधः स्यात् नचैवम् । एतेन भेदाद्धर्म्मिणः प्रतीतावपि शब्दलिङ्गद्वारा धर्म्माणाञ्चेत् अप्रतीतिः इन्द्रियद्वारापि मा भूदित्यादि प्रसंगस्यापि कटिचालनमपास्तम् । तत्तदुपाध्युपलम्भसामग्री विरहकाले प्रसञ्जितस्येष्टत्वात् विचित्रशक्तिकत्वाच्च प्रमाणानां लिङ्गस्य प्रसिद्ध प्रतिबन्धप्रतिसन्धानशक्तिकत्वात् शब्दस्य समयसीम विक्रमत्वात् इन्द्रियस्यार्थशक्तेरप्यपेक्षणात् । ननु सम्बन्धोऽर्थइत्येव प्रमाणैः मत्याय्यते अतिप्रसङ्गात् यस्य तूपाधेरुपलम्भश्च येन धर्म्मं ग्रप्रलभ्यते तस्यानुपलम्भे स तेन नोपलभ्यत इति परं युज्यते सर्व्वाद्यनुपलम्भे वा तथा च सिद्धसाधनमिति संक्षेपः ।

स्यादेतत् यदीन्द्रियेण समानविषयावेव लिङ्गशब्दौ ततः प्रतिभासभेदोऽनुपपन्नः । एकविषयत्वं हि विप्रतिभासाभेदेन व्याप्तं सव्येतरनयनदृष्टवद्दृष्टम् । नचेह तथा यथा हि प्रत्यक्षे चेतसि देशकालावस्थानियतानि परिस्फुटरूपाणि स्वलक्षणानि प्रतिभान्ति न तथा शाब्दलैङ्गिकविकल्पेषु । तत्र हि विजातीयव्यावृत्तमिव परस्पराकारसङ्कीर्णमिवास्फुटमिव प्रत्यक्षापरिचितं किञ्चिद्रूपमाभासमानमनुभवविषयः । नचोपायभेदमात्रेण प्रतिभासभेद उपपद्यते नहि प्रतिपत्त्युपायाः प्रतिपत्त्या[illegible]रं परिवर्त्तयितुमीशते । नचैकं वस्तु द्व्याकारमिति प्रतिबन्धसि[illegible] अस्य प्रयोगः यो यः क्वचित् वस्तुनि प्रत्यक्षप्रतिभासाद्विपरीतप्रतिभासो नासौ तेनैक विषयः यथा घटपश्चात् पटप्रतिभासः । तथा च गवि प्रत्यक्ष प्रति

भासाद्विपरीतः प्रतिभासोविकल्पकालइति। इदमप्यवद्यं चित्राचित्र
प्रतिभासाभ्यां मिथोविरुद्धाभ्यां एकनीलविषयाभ्यामनैकान्तात्।
नहि चित्राध्यक्षे यन्नीलं चकास्ति तदेव प्रत्यासन्नकेवलं तदेव वा
पुरुषान्तरस्य येनाकारेणैकविषयत्वं तयोर्न तेनैव विरोधो येन
च विरोधो न तेनैकविषयत्वम्। धर्म्मान्तराकारेण हि विरोधो
नीलमात्राकारेणचैकविषयतेति चेत् नन्विहापि धर्म्मान्तराकारेण
विरोधोगोत्ववत् पिण्डमात्राकारेण चैकविषयतेति तावन्मात्रनिरूप-
करणेऽसिद्धोहेतुः पूर्व्वञ्च सिद्धसाधनम्। नहि प्रात्यक्षिक
विकल्पकाल देशकालनियमादयोपि सर्व्वएव धर्म्मविशेषा विषयभाव
मासादयन्तीत्यभ्युपगच्छाम।

ननु धर्म्मिण्येव स्फुटास्फुटप्रतिभासभेदः कथं न कथञ्चित् यथा
यथाहि धर्म्माः प्रतिभान्ति तथा तथा स्फुटति प्रतिभानव्यवहारः।
यथायथा च धर्म्माणामप्रतिपत्तिः तथातथा प्रतिभानस्य मान्द्यव्यव-
हारः दूरान्तिकादौ प्रत्यक्षेपि लोकानाम्। ननु सर्व्वथैवाप्रतिपत्तौ
विदूरादिप्रत्ययेपि पक्षएवेति चेत् अस्तु। ननु तावतापि धर्म्मधर्म्मि
भेदसिद्धौ प्रत्यक्षबाधस्य तत्सन्देहेपि सन्दिग्धानैकान्तिकस्य वा
परिहारः तावतापि प्रतिभासभेदस्योपपत्तेः यदि च नैवं दूरत्वादि
प्रत्ययेषु कः समाश्वासविषयः यस्यार्थो लभ्यत इति चेत् नन्वलाभो
ऽपि पूर्व्वपूर्व्वोपलब्धानुपमर्द्दनेनैव। नहि सत्त्वद्रव्यत्वपार्थिवत्ववृक्ष-
त्वादिकं परिभूय शिंशपा लभ्यते यथार्थक्रियासिद्धिरिति चेत्
सर्व्वेषामनुवृत्तेः। कस्यार्थक्रियेति विशिष्यायकं न किञ्चित् किन्तु
सङ्कीर्णार्थक्रियाविरहादेकमेव तत्र वस्तु। नचैकस्मिन् प्रतिभासभेद
इत्येकएव प्रत्ययस्तत्र सालम्बनइति भ्रम इति चेत् तथापि कतम
इत्यनिश्चये सएवानाश्वासः। असङ्कीर्णापि चार्थक्रिया न व्यक्तितः
सामग्रीतः सर्व्वसम्भवात्। अतएव न सन्तानतः। नह्येकसन्तान
नियताकाचिदर्थक्रिया नाम। काञ्चिदर्थक्रियां प्रति प्रत्यक्षानुपलम्भ

गोचरएव तथा व्यवस्थाप्यत इति चेत्तर्हि दूरतमाद्युपलब्धा अपि तथा व्यवस्थाप्याः। सर्व्वेषामेव तेषां तान्तामर्थक्रियां प्रति प्रयोजकतया अन्वयव्यतिरेकगोचरत्वादिति ।

स्यादेतत् न धर्म्मान्तराकारेण प्रतिभासभेदाभेदहेतुः किन्तु पारोक्ष्यापारोक्ष्यरूपतया । सा हि न धर्म्मभेदानप्युपादाय समर्थयितुं शक्या तेष्वपि परोक्षापरोक्षज्ञानोदयात् । तथापि धर्म्मान्तरानुसरणेऽनवस्थानादिति चेन्न तयोरविषयाकारत्वात् । द्विविधो हि ज्ञानधर्म्मो विषयावच्छेदो जातिभेदश्च । तत्र विषयावच्छेदभेदेन विषयस्य भेदस्थितिरभेदनिराकरणं वा न तु द्वितीयेन तस्य कारणभेदेनैवोपपत्तेः श्रुत्यनुमिति स्मृतिवत् । यथा च विषयभेदेपि कारणभेदादेवापरोक्षजातीयमिन्द्रियजं ज्ञानं तथा विषयाभेदेपि कारणभेदादेव परोक्षापरोक्षजातीयमिन्द्रियलिङ्गज्ञानं भवत् केन वार्य्यते। कारणे वा कार्य्यभेदं प्रति कारणभेदोऽप्रयोजकः स्यात् तथाचाकस्मिकः स आपद्येत । जातिभेदोयं ननूपाधिभेदइति किमत्र नियन्तृ कारणमिति चेत् अनुभवएव। नहि व्यवसायकाले पारोक्ष्यापारोक्ष्यस्मृतित्वानुभूतित्वानि परिस्फुरन्ति असावभिमानवदनभिमान् सोऽभिमानितिस्फुरणात्। अनुव्यवसायकाले तु तत्प्रतिभासः अमुमनुमिनोमि इमं पश्यामि तं स्मरामीत्युल्लेखात्। कथं तर्हि परोक्षोऽर्थः प्रत्यक्षश्चेति व्यवहारः यथानुमितो दृष्ट स्मृतइति । यदप्यनन्तविपक्षाणामित्यादि तदपि सन्दिग्धानैकान्तिकं विधिनापि तथाभूतेन साधनव्यवहारस्य निर्व्वाहात्। तथाह्ययं व्यवहारो न निर्निमित्तो नाप्यनेकनिमित्तो नाप्यनेकासंसर्गैकनिमित्तः अतिप्रसङ्गात् । ततोऽनेकसंसर्गैकनिमित्तोऽयं परिशिष्यते। तथा च तादृशस्य विधिरूपत्वे कोविरोधः येन व्याप्तिः स्यात् प्रत्युत निषेधरूपतायामेव विरोधोद्भावितः प्रागिति कृतं प्रसङ्गसमुत्थानैः । नापि प्रवृत्त्यादिव्यवहारनिर्व्वाहकत्वमपोहकल्पनाया

अन्यावभासादन्यत्र प्रवृत्तावतिप्रसङ्गात् अध्यवसायादयमदोष इति चेत्

अथ कोऽयमध्यवसायः किमनीलस्य वस्तुधर्म्मतयावभासः किम्वा वस्त्वात्मकतया ततो भेदाग्रहो वस्तुवासनासमुत्थत्वं वेति न प्रथमः विकल्पे तदनवभासनात् । न द्वितीयः असाधारणविषयतया शब्द विकल्पयोरप्रवृत्तिप्रसङ्गात् तस्यासामयिकत्वात् । तथाहि विकल्प-वस्तुनोश्चक्षूरसवत् सर्व्वथाविरोध एव साधारणविषयत्वे तु वस्तुना प्रतिभासनं तस्यासाधारणत्वात् । न तृतीयः प्रवृत्तिसामानाधि-करण्यनियमानुपपत्तेः भेदाग्रहस्य सर्व्वत्र सुलभत्वात् । अतेभ्यो भेदो गृहीत इति चेत् किमेतेषु गृह्यमाणेष्वगृह्यमाणेषु वा । नाद्यः अतेषामपि स्वलक्षणानां विकल्पागोचरत्वात् । न द्वितीयः अनिर्णीतावधेर्भेदस्याग्रहणात् प्रथमे वाध्यवसेयाभिमतस्वलक्षणादपि भेदोऽगृहीताविशेषात् । गृहीतादग्रहो भेदस्यागृहीतेभ्यस्तु तद्ग्रह इति चेत् यदि धर्म्मलक्षणो भेद तदा विपर्य्ययः स्वरूपलक्षणश्चेत् अविशेषात् सर्व्वत तद्ग्रहोऽन्यत्र तादात्म्यग्रहात् निःस्वरूपत्वात्-तस्य । न स्वरूपलक्षणो भेद इति चेत् अगृहीतादपि तथा स्याद-विशेषात् निःस्वरूपमपि सस्वरूपमिव भिन्नमिव प्रथितमिति चेत् तत् किमध्यवसेयापेक्षया सस्वरूपमिव न प्रथितम् अध्यवसेयस्वरूपमिव वा स्फुरितम् । आद्ये अप्रतिपत्तिर्वा स्यादविशेषात् निःस्वरूपप्रति-पत्तिर्वा स्यात् उभयथापि सामानाधिकरण्यप्रवृत्ती न स्यातां द्विती यस्तु प्रागेव दूषितः । नापि चतुर्थः नीलानुभववासनासमुत्थस्य पीतानुभवस्य नीले प्रवर्त्तकत्वप्रसङ्गात् । नानुभवः प्रवर्त्तकः अपि तु विकल्पः स च यस्मा तस्यैव विषय इति चेत् यस्मादिति साक्षात् परम्परया वा प्रथमे शाब्दलैङ्गिकविकल्पानामप्रवर्त्तकत्वप्रसङ्गः । द्वितीये तु स एवातिप्रसङ्गः । अनुभवव्यापारपुरस्कारान्नियम इति चेत् कः पुरस्कारार्थः न तावदनुभवैकविषयत्वं विकल्पेन तद-संस्पर्शात् नाप्यनुभवकारितैः स्वात्मनि कल्पनापोढाभ्रान्तत्वात्

विषये चाभिलापसंसर्गयोग्यप्रतिभासत्वात् तथानवभासे वा विकल्प
त्वव्याघातात् विशेषोपलब्धौ चारोपासम्भवात्। नापि तद्धर्मप्रामाण्या
रोपः तस्यानियतविषयत्वे प्रवृत्तिनियमानुपपत्तेः परमार्थसद्विषयत्वे
च तुल्य विकल्पसंसर्गप्रसङ्गात् अलीकविषयत्वे चाप्रवृत्तेः अलीक-
स्यानलीकतया तु स्फुरणं निषिद्धं नाप्यनुभवात् स्वात्मनोभेदाग्रह
एव तद्व्यापारपुरस्कारः स्वरूपस्य स्वतोऽवगतेः विषयभेदस्य च
प्रागेव निरूपणात्। नाप्यपारोक्ष्यं तस्यापि स्वात्मनि सर्वज्ञान
साधारणत्वात् विषये च विकल्पस्य तदभावात् तथाभावेऽप्यन्यत्र
नियतप्रवृत्त्यनुपपत्तेः। नापि विषयसारूप्यं तदभावात्।

नहि परमार्थसदलीकयोः समानरूपता नाम यदि रूप-
शब्दो धर्म्मिवाचकः समानशब्दश्चैकपर्य्यायः व्याघातस्फूर्तिः प्रकृते यदि
वा रूपं धर्म्मः समानश्चैकोवैकजातीयोवेति तथापि व्याघातस्फूर्तिः।
प्रकृते अतद्व्यावृत्तेरिति चेन्न तस्य चालीकानलीकनिष्ठतया एक-
त्वैकजातीयत्वयोरभावात्। अभिमानिकोऽयं सारूप्यव्यवहारो न
पारमार्थिक इति चेन्न अभिमानस्यैव चिन्त्यमानत्वात् नहि चिन्तित
प्रकारान् परिभूयापरोऽभिमानो नाम। स्वभावादेव कश्चिद्वि-
कल्पः कस्मिंश्चिदेवास्फुरितेपि प्रवर्त्तयति किमत्र क्रियतां सचास्य
स्वभावभेदः स्वकारणादेवायातः तत्र कः पर्य्यनुयोज्यतामिति चेत्
तत् किमप्रत्यासन्नमेव विकल्पस्तत्र प्रवर्त्तयति प्रत्यासत्त्यन्तरा-
भावात् स्वभावप्रत्यासन्नो वा व्यवहृतिरेव वा प्रत्यासत्तिः। न
प्रथमः अतिप्रसङ्गात् द्वितीये तु स्वभावेनोत्तरं स्यात् किन्तु तदेव
स्फुरणं नहि व्यवहारे प्रवर्त्तयितव्ये स्वभावप्रत्यासत्तिमवधूय ज्ञान
ज्ञेययोरपरः कश्चिद्विषयविषयिभावः सदसदनिर्वचनीयार्थख्याति
वादिभिरपि स्वभावप्रत्यासत्तेरवर्जनीयत्वादिति वक्ष्यमाणत्वात्।
तृतीये तु व्यक्तमात्माश्रयः व्यवहारनियमं पृष्टेव निबन्धनानु-
सरणात्। कारणशक्तेरसदुत्पत्तिनियम इति चेत् सत्यम्

एतच्चिन्तनीयं कारणशक्त्यापि नियतजातीयनियतया भवितव्यम्
अन्यथा ज्वलनविकल्पाज्जलेपि प्रवृत्तिप्रसङ्गात्। दाहादिसमर्थाकार
विकल्पजातीयं तात्त्विके वह्नौ प्रवर्त्तयतीति जातिर्वोपाधिर्वा निया-
मक इति चेन्न तर्हि रत्नमरीचिनिचये ततः प्रवर्त्तेत तज्जातीयस्य
दहनएव प्रवर्त्तनसामर्थ्यात्। ताद्रूप्येण तस्यैव प्रथनादिति चेत् प्रथतां
नतु तस्य प्रवर्त्तनयोग्यता तच्च प्रथननियता वह्निस्वलक्षणे वह्निविक-
ल्पादप्रवृत्तिप्रसङ्गात्। स्वीकुरु वा तस्यापि तत्र स्फुरणं परिहर वा
वह्निविकल्पादवह्नौ प्रवृत्तिमिति। एतेनाकारसारूप्यं नियमहेतु-
रपास्तः अर्थनीयसारूप्याभावेपि प्रवृत्तिदर्शनात् अनर्थनीयसारूप्य
मात्रस्य चातिप्रसञ्जकत्वात्। नच बाह्यवादे ज्ञानज्ञेययोर्विवक्षित
सारूप्यसम्भवः सामग्रीवैषम्यात् साम्ये वा जाड्यचैतन्ययोरैकाप्येव
प्रसङ्गात्। नच साम्ये प्यवान्तरविशेषात् कार्य्यविशेषव्यवस्था मिथः
सामग्र्यननुविधानेन जायमानत्वात् नच कार्य्याज्ज्ञेयं सामग्रीसाम्यं
बाह्ये धूमाद्यनुविधीयमानस्य कारणस्य दृश्यत्वात् धूमज्ञानस्य च
तद्व्यभिचारोपलम्भात् नच तदेव कारणमेकत्र दृश्यमदृश्यञ्चान्यत्रेति
युक्तम्। यदि च नीलिमादिर्विज्ञानस्य जातिविशेषः कथं तदतिपत्य ज्ञेयं
स्पृशेत् ज्ञेयस्य चेत् कथं ज्ञानं तद्विशिष्यादिति जातिसङ्करापादन
प्रस्तावे चिन्तितप्रायम्। तस्मात् स्फुरितएव ज्ञानं प्रवर्त्तयतीति गल-
पादिकयाप्यङ्गीकारयितव्यो गत्यन्तराभावात्। तर्हि स्फुरिते स्वाकार
एव प्रवर्त्तयतु तत्र प्रवृत्तएवचार्थी तत्सदृशमर्थमासादयति प्रभायां
प्रवृत्तोमणिवदिति चेन्न अभिमतार्थक्रियासामर्थ्य विरहिण्यप्रवृत्तेः।
नच बाह्ये विकल्पाकारारोपसम्भवः तस्य तेनासंस्पर्शात्। नचाकारे
बाह्यत्वारोपः स्वरूपस्फुरत्यस्वरूपारोपानवकाशात्। प्रभायान्तु
मणिबुद्ध्यैव मण्यर्थी प्रवर्त्तते नतु तद्बुद्ध्येति दृष्टान्तोप्याभासः।
नचाकारवादेऽस्फुरतोऽर्थस्य कथायां प्रमाणमप्यस्ति आकारकादा-
चित्कत्वस्य तैमिरिककेशाद्याकारेष्वनैकान्तिकत्वात् अर्थक्रियासम्वाद

स्यापि स्फुरितस्याकारमात्रशरीरत्वात् बाह्यस्य चासिद्धेः। निराल-
म्बनार्थाकारवच्च क्वचिद्वासनावशादर्थक्रियाकारेऽपि निरालम्बनएव
भविष्यतीति विपक्षे बाधकाभावात् प्रतिबन्धस्याप्यसिद्धेः। तस्मा-
द्बाह्यसिद्धिः साकारस्य ज्ञानमिति वा न लोलुपत्वमिति। अस्तु तर्हि
बाह्यमेव स्वलक्षणं विकल्पस्य विषयः। यद्यपि स्वरूपेणासामयिकतया
नाभिलापसंसर्गयोग्यं तथाप्यतद्रूपपरावृत्तिप्रत्यासत्त्या साधारण
रूपतामापन्नं सत्तथा भवत्येव। यथाह्येको गौरगोव्यावृत्तस्तथापरेऽपि
गावइति चेत्। अथ कोऽयमगोर्नाम किमेकस्य गोःस्वलक्षणस्यानात्मा
आहोस्वित्तद्गतधर्म्मविरही प्रथमे न गवान्तरेऽपि गोशब्दविकल्पौ
प्रवर्त्तयाता अश्वादिवदनात्मत्वाविशेषात् अतिप्रसङ्गः महिषमात-
ङ्गाद्यगोव्यावृत्त्याश्वेऽपि गोव्यवहारप्रसङ्गाच्च। स गोरपि व्यावर्त्तत
इति चेत् तत् किमभिमतोगौर्गोरपि न व्यावर्त्तते। व्यावर्त्तते किन्तु
स्वयमप्यसौ गौरिति चेत् यद्यगोव्यावृत्तिरेवास्य गोत्वं तदश्वेऽपि
समानम् अन्यच्चेत्तदुच्यताम्। द्वितीये तु तद्गतधर्म्मविरहिव्यावृत्तस्त-
दानेव स्यात् तच्च च न विवादः। मिथः सम्भिन्नाकाराः पिण्डाएव
साधारणं रूपमस्तु अतमतद्रूपपरावृत्त्येति चेन्न सम्भेदाभावात्।
सहि न वास्तवः पिण्डानां विरुद्धधर्म्माध्यस्तत्वात् नाभिमानिकः
शावलेयादेर्भेदेनैव प्रथनात्। तद्धर्म्माणां सम्भेदाभिमानइति चेन्न
धर्म्मव्यतिरिक्तधर्म्मानभ्युपगमात् अभ्युपगमे वा पर्य्यवसितं विवादेन।
स्यादेतत् भिन्नानामेव स्वलक्षणानां समानाकारविकल्पजननसामर्थ्य
मस्तु तदपेक्षया च केचिद्गावइति व्यपदिश्यन्ते केचिदगावइति। तच्च
सामर्थ्यं स्वकारणनियतत्वादपर्य्यनुयोज्यम् अन्यथा सामान्येष्वपि
सामान्यान्तरं कल्पेत अनुगतव्यवहारानुरोधात्। तथा गोपिण्डे-
ष्वपि गोत्वस्य तेष्वेव अवस्थित्यनुरोधात्। उभयमुखी चैवमन-
वस्था स्यादिति चेत् यद्येवं निमित्तान्तरमनपेक्ष्य एकव्यवहार एके-
ऽत्यन्तभिन्नैरेव भिन्नव्यवहारोऽभिन्ने एवानेन केनचित् किन्न साध्यते

व्यक्तिस्वभावावलम्बनस्योभयथापि तुल्यत्वात्। अथैवं सत्येकव्यवहारः क्वचिदपि न स्यान्निर्निमित्तो वा भवेत् उभयमप्यनिष्टम्। तदेतत् तुल्यमनेकव्यवहारेऽपि एवं सति न स्यान्निर्निमित्तो वा भवेत उभयमप्यनिष्टम्। तस्मादेकैकव्यवहारवदनेकेनाप्यनेकव्यवहारएवेति सामर्थ्यनियमः। का गतिस्तर्हि सामान्येष्वनेकेष्वेक व्यवहारस्य या चन्द्रमस्येकस्मिन्ननेकव्यवहारस्य। भ्रान्तोऽसाविति चेत् अयमपि भ्रान्तएव बाधकस्योभयथापि तुल्यत्वात्। सर्व्वत्र भ्रान्तोऽस्त्विति चेत् भेदव्यवहारोऽपि तथा किन्न स्यात्। अर्थक्रियास्थितेरिति चेत् व्यक्तिभेदाभेदव्यवस्थापकार्थक्रियाभेदाभेदवत् सजातीयासजातीयत्वव्यवस्थापकार्थक्रियासाजात्यवैजात्ये अपि किन्न पश्यसि। ते अपि भ्रान्ते इति चेत् अर्थक्रियाभेदोऽपि भ्रान्तइति तुल्यम्। अस्त्वेवमिति चेत् त्यज तर्हि वाह्यव्यसनम्। अयमेवाशयइति चेत् तत्र वक्ष्यामः मा भूदार्थक्रियासाजात्यवैजात्यावगमः। भ्रान्त्यनुगमोऽपि एकं निमित्तमनादृत्य कथं तदपि हि कार्य्यसाजात्यं सामग्रीसाजात्यमन्तरेणाकस्मिकमापद्येत अन्यथा तत् परम्परालम्बनमपि विलम्बनमेव। भिन्नैस्तैरभेदव्यवहारसिद्धौ व्यक्तिभिरेव तथाभूताभिरभिमतसिद्धेस्तदनुसरणप्रयासवैफल्यात्। तस्मादारोपव्यवहारस्याप्यनारोपितजात्यनादरे असम्भवएवेति।

अस्तु तर्हि जात्यादौ बाधकादपोहसिद्धिरिति चेत् व्यवहारस्यान्यथासिद्धौ क्व बाधकम्। अन्यथा विपक्षे बलवद्बाधकमुपनीयानन्यथासिद्धिविभ्रान्तोऽपि स्वभावहेतु बाधकशङ्कयाप्युपहन्येत ततो बाधकव्यसनमपहायानुपलम्भव्यवस्थितिरन्यथाप्युपपाद्यताम्। नचैतच्छक्यं गत्यन्तराभावात्। नच बाधकमप्यस्ति तद्धि स्वरूपतो वा ज्ञानतो वा स्यात्। स्वरूपतोऽप्यनुपलम्भो वा विरुद्धधर्माध्यासो वा न प्रथमोऽसिद्धेः स्फुरत्येव हि साधारणाकारस्य शरीरं चिन्तयितुमारब्धं नास्फुरतः अपोहे साधारणस्फुरणं व्यासेधामो ननु

विकल्पे तस्य समानशब्दसङ्केतग्रहतिमिरनिकुरम्बकरम्बितदृष्टिभि-
रेवोपपादनात् नत्वस्माभिः । कल्पनाकोषस्यानन्तप्रसरतया तत्त्वा
व्यवस्थापकत्वादिति चेन्न शब्दानुसन्धानविरहेपि जायमानत्वात् ।
तथापि तदाभासमात्रमेवेति चेत् किमेकशब्दसङ्केतविषयाभावेपि समान
शब्दसङ्केतग्रहवासनावशादेकाकारपरामर्शः तत्सद्भावे वा । न ताव-
दाद्यः नानासास्नादिमद्व्यक्तिवत् खर्जूरीपनसचम्पकशिंशपादिष्वपि
गोशब्दसङ्केतग्रहवासनावशात्तथाविधप्रत्ययानुगमप्रसङ्गात् । इष्ट
एवायमर्थ इति चेत् सोऽयं सास्नादिमतीषु व्यक्तिषु साधारणं रूपं
न पश्यति पश्यति तु गोशब्दवाच्येषु दृश्यस्विति किमत्र वक्तव्यम् ।
नूनं बधिरमेवास्य श्रोत्रमिति शक्यमिदमितरेणापि वक्तुमिति चेत्
शक्यं न तु व्यवहारस्तन्मूलो विपर्यासयितुम् । नन्वेतावतापि विकल्पः
सिध्यत्वनुभवस्तु कथं सवस्तुकविकल्पसिद्धेरेव । कथन्तस्य सवस्तुक-
तेति चेत् शब्दवासनादिकारणान्तरविध्वंसादिति तूष्णीं भव । अन्त-
राले किमिति नोपलभ्यत इति चेत् उपलब्धिकारणाभावात् । पिण्ड एव
कुण्डे बदरवत् कुतो नोपलभ्यत इति चेन्न अनन्यदेशत्वात् भेदेन तूपलभ्यत
एव । पिण्डान्तरासंसर्गिण्यपि पिण्डेनुभूयमाने तत् संसर्गितयानुभवात् ।

नापि द्वितीयं बाधकम् अवयविसमानयोगक्षेमत्वात् । जाय-
मानपिण्डसम्बन्धानुपपत्तेरप्रतिक्रमात्तथासत्त्वादनुत्पादाच्चेति चेत्
कथं पुनस्तथासत्त्वं त्वया व्यज्ञायि । तत्र सत्त्वे तत्रत्याकाशादे-
रपि गोत्वप्रसङ्गादिति चेन्नवा एतत् पश्चादपि तत्रत्याकाशादिना
सम्बध्यते । येन च पिण्डेन सम्बध्यते न तत्र कदापि तन्नास्ति
तत् कुतो विरोधः । अथ पिण्डमन्तर्गडुमुपादायोपलभ्यतया
तत्रेति व्यवहारः तदा तदुपसर्पणापसर्पणोत्पत्तिविनाशैरेव तदुप-
पत्तौ न यातीत्यादिः अपराद्धेषोरिव धानुष्कस्य कण्ठाडम्बरः ।
तथाहि पिण्डमधिकृत्योपसर्पणापसर्पणाभाव स्तदुपलक्षितं देश
मधिकृत्य च सत्त्वासत्त्वे सामान्यस्येति किं केन सङ्गतं तथाप्यनुत्पन्ने

पिण्डे तस्यासत्त्वं सुलभमेव तदसत्त्वादिति हृदयं तन्न स्वरूपसत्त्वासत्त्व
योर्द्वितीयानपेक्षत्वात् सम्बन्धत्वासम्बन्धत्वे तु द्वितीयापेक्षे ततस्तया
सति नास्तीति कोऽर्थः तेनासता न सम्बध्यतइति। तथैवमेतत्
पश्चात् कथं सम्बध्यतामिति चेत् तस्य सत्वात् असम्बन्धत्वस्य तदसत्व
प्रयुक्तत्वात् ततः प्रागसन् पिण्डः पश्चात् कथमुपपद्यतामिति चोद्य-
निष्ठा सा च सत्कार्य्यवादमनुपततीत्यभुक्तवान्तिः। तथापि सामा-
न्यतद्वतोरत्यन्तभेदे कथं सामानाधिकरण्यमिति चेत् किमिदं समाने
नाधिकरणेन हि सम्बन्धः सामानाधिकरण्यं तस्य च भेदेन को
विरोधइति नाधिगच्छामः। गवाश्वयोरपि तथाभावप्रसङ्गइति चेत्
ननु व्यतिरेकदृष्टान्तस्थानं तत् ननु विरोधस्थानं तच्च नैकतमयोपि
यदि कश्चिद्ग्रामः स्यात् परिदृश्यमानानामपि तथाभावप्रसङ्ग
इति क्व नाम दुर्लभं तथापि विशेषोवाच्य इति चेत् अस्ति स्वाभा-
विकोविशेषो यत् किञ्चिदेव केनचित् सम्बद्धं न सर्व्वं सर्व्वेणेति।
अनुगमो नियमोपि स्वभावादेव किन्न स्यादिति चेत् एकस्यानेक
सम्बन्धे अनेकस्य चैकसम्बन्धे अविरोधात् एकानेकयोरनेकैकव्यवहार
विरोधादिति। नापि ज्ञानतोबाधकं तत्स्वरूपप्रतिक्षेपस्यानुभव
बाधितत्वात् कारणप्रतिक्षेपस्य च तस्य जन्मनैवापास्तत्वात् एकत्व
प्रतिक्षेपस्य च विरुद्धधर्म्माध्यासविरहप्रतिहतत्वात् पारोक्ष्यापारो-
क्ष्यादेरसिद्धेः विषयमप्रतिक्षिप्य तन्मात्रस्य प्रतिक्षेप्तुमशक्यत्वात्
तदप्रतिक्षेपस्य च दर्शितत्वात् इन्द्रियजत्वप्रतिक्षेपस्य चेन्द्रियान्वय
व्यतिरेकानुविधानबाधितत्वात् साक्षात्कारित्वविश्रान्ते च तदनु-
विधानस्याव्यभिचारात्। अन्यथा निर्व्विकल्पकस्याप्यनिन्द्रियजत्व
प्रसङ्गात् कामातुरकामिनीज्ञानस्य तदन्तरेणाप्युपपत्तेः बाधका-
भावाच्च दर्शनव्यापारोपाधिकत्वकल्पनानवकाशात् अवकाशे वा विप-
र्य्ययकल्पनाया अपि प्रसङ्गात्। इन्द्रियमनपेक्ष्य साक्षात्कारित्व
मनन्तरप्रत्ययमपेक्षमाणस्य साक्षात्कारिविकल्पोपपत्तेः। तद्विपरी-

तानुत्पत्तिप्रसङ्गात् प्रथममनुत्पत्तेः पूर्व्वंसख्यादिसहकारिवैधुर्य्य
निबन्धनत्वादित्येषा दिक् ।

अस्तु तर्हि प्रयोजनानुरोधादपोहस्वीकारः सर्वधर्म्मावाच्यत्व-
सिद्धिरियं परमं प्रयोजनम् । कल्पनाजालविधूननेन गम्भीरोदारसमा
धिसमधिगमादिति चेत् निष्प्रमाणकमिदं कः श्रद्दध्यात् प्रमाणञ्चात्र
न प्रत्यक्षानुमाने आगमश्च न किञ्चिद्वदतीति त्वयैव ग्राहितः
शिष्यः । न चैवं चेतनो ग्राहयितुमपि शक्यते स्ववाग्विरोधस्योद्भट-
त्वात् । तथाहि शब्दस्य क्वचिदपि वस्तुनि मानसिद्धा बाधविधि
व्यवहृतिः किमिच्छाधीना नोवा । अन्त्ये व चेत् कथमियन्ति न दूष-
णानि । नाद्ये व चेत् स्ववचनप्रतिरोधसिद्धिः । इति तवैव विषय
सञ्चारमात्रेण श्लोकः । न चार्वाकमिव तवाप्यत्र मूकतैव शरणं
सर्वथा वचनविरोधे ह्युदासीनस्य सा शोभते । न चात्र विधा
विरोधः कश्चित् । न च त्वमुदासीनः प्रयोजने प्रवृत्तत्वात् । तस्मादल
मङ्कुषिदीपिकया भ्रान्तध्वंसविधिमनुष्ठायेति आगमस्य तत्त्वार्थ
परिस्पर्शित्वविरोधे न स्वर्गापवर्गार्थिनां प्रवृत्तिः सिद्ध्यतीति प्रयो-
जनमस्य विचारस्यैव परं सुन्दरम् । तस्माच्छब्दैः किं वाच्यमित्यनु-
योगे किं प्रतिभासादध्यवसायात् यद्वा तत्त्वतइति विकल्पस्थोऽन्या
पोढाकारोऽन्यापोढस्वलक्षणं न किञ्चिदिति क्रमेण यत् प्रत्युक्तम् ।
तत्र प्रथमे समयविपर्य्यासः विकल्पाकारस्य समयाविषयत्वात् । द्वि-
तीये तु प्रवृत्तिविपर्य्यासः अदृष्टे नियामकाभावात् । तृतीये स्ववाग्वि
रोधः अस्यैवार्थस्यानेन तत्त्वतावचनात् वचने वा तत्त्वतोऽनुत्तर-
त्वादित्युपसंहारः तत्सिद्धमेतत् न सविकल्पमात्मनि बाधकमिति ।

---

विज्ञानवादिनि जागरूके बाह्यमेव नास्ति कुत आत्मेति चेत्
स तावदिदं पृष्टो व्याचष्टां किं ते ग्राह्यग्राहकभागयोः परमार्थ
सतोरेवाभेदो विवक्षितः उताहोऽभिन्नजातीयत्वम् । अथ ग्राह्यांश

स्यालीकत्वमिति। तत्र प्रथमे साध्ये यः कश्चिद्धेतुरुपादीयते सहोप-
लम्भनियमो वा ग्राह्यत्वं वा प्रकाशमानत्वं वा स व्यक्तमाभासः।
तथाहि नीलधवलादिपरस्परविरुद्धाकारनिकरावगाहि विज्ञानमनु-
भूयते तदिदं तस्य स्ववधाय कृत्योत्थापनम्। यदि हि मिथः प्रत्यनीक
धर्म्मानुल्लिखेत् कथमेकं तत्तदात्मकं भवेत् नचेदुल्लिखेत् कथं तदाकारं
नाम स्वसम्वेदनस्यानुल्लिखितरूपाभावात् बाह्यस्यैवंविधविरुद्धधर्म्मा-
ध्यासाद्भयं तथात्वेऽप्यभेदेऽर्थक्रियाचेतनप्रवृत्तीनां सङ्करप्रसङ्गात्
विवेचनानुपपत्तिप्रसङ्गाच्च। ननु विज्ञानस्य नहि तस्यार्थक्रियाधीनं
सत्त्वम् अपि तु प्रतिभासमात्राधीनम्। नापि तत्रार्थक्रियार्थिनः
काचित् प्रवृत्तिः स्वरसवाहि विज्ञानप्रवाहातिरिक्ताया अर्थक्रियाया
स्तदर्थिनश्चाभावात्। विवेचनाभावश्चाच परमो निर्वाहः। स्वसंविदि
तद्रूपत्वादिति चेत् तत्किमङ्कुपरिवर्त्तशान्तेराश्रमपदमिव विज्ञानमा
साद्य व्यालनकुलादेरिव नीलधवलादेः शाश्वतिकविरोधत्यागो नि-
भृतवैराणां तत्फलत्यागो वा। न तावत् प्रथमः परस्परनिषेधविधि
नान्तरीयकविधिनिषेधयोरविरोधे जगति विरोधोच्छेदप्रसङ्गात्।
नचैवमस्त्विति उत्तरेऽपि निर्वृतिः कथमप्युक्तरूपताया अनिवृत्तेः
तावन्मात्रशरीरत्वाच्च विरोधस्य। तत्सिद्धिरेव च भेदसिद्धिरतो न
द्वितीयोऽपि यत्तु बाह्ये विरोधपालनाय विशेषो दर्शितः स तेषामेवास्तु
यदि हि विरुद्धधर्म्माध्यासस्य भेदसाधकत्वं प्रति समाश्वासः किमर्थ
क्रियां प्रति नियमोपन्यासेन नचेत्तथापि किन्तेन सोऽपि ह्यर्थक्रिययो
र्विरुद्धधर्म्माध्यासेन भेदे सति स्यात्। अन्यच्च यथा बाह्येऽर्थक्रियां प्रति
नियमो न स्यादिति दृष्टस्तथा ज्ञानेऽपि प्रतिभासनियमो न स्यादिति
दृष्ट एव। न प्रतिभाससाङ्कर्य्यनियमः सत्येव प्रतिभासेऽपि स्यादिति
चेन्न सहानुपलम्भसाङ्कर्य्यं ब्रूमः किन्तु नीलस्यैव पीतत्वेन पीतस्यैव
नीलत्वेनानुपलम्भं सएव मूलं सर्व्वविरोधानाम्। अन्यथोपलम्भा-
नुपलम्भयोरप्यसिद्धिरेव यदपि नोपलभ्यतइत्युच्यते तदप्युपलभ्यत-

एव यदिदमस्मादिकमुपलभ्यते तन्नोपलभ्यते इत्युक्तोत्र निर्वृत्तेः । तेनात्मना नोपलभ्यतइति चेत् तत् किं सहोपलम्भेपि नीलात्मना पीतमुपलभ्यते यतो न विरोधः स्यात् तस्मादुभावपि विरोधौ समौ समौ वाभेदविसर्ज्जने केवलमेकस्य प्रौढ़िः सुभगाभिकन्यायेन यदि स्यात् एतेन विवेचनाभावोपि निरस्तः आकारयोरसंभेदेन वेदनस्यैव विवेचनत्वात् अपि च क्षणिकतायामेकपुरुषापेक्षया वाह्यस्यापि कुतो विवेचनं नानापुरुषापेक्षयापि सन्दिग्धं परेण परस्यावेदनात् का सन्देहइति चेत् अभेदेनैव तत्त्वविवेचनं साध्यं तथा च किन्तेनोपन्यस्तेनापि । तज्जातीयस्य तु वाह्यवद्विज्ञानस्यापि विवेचनमेवेति स्वसम्वेदनबाधितोऽयं विरुद्धधर्म्माध्यासो न भेदसाधक इति उष्ट्रलगुडकं सम्वेदनेनैवास्य साधितत्वात् । छिनत्तु तर्हि प्रकाशमानतानेकत्वं विरुद्धधर्म्माध्यासोप्येकतां तथाप्येकत्वानेकत्वविकल्पनीलाद्याकारप्रकाशस्वरूपे किमायातमिति चेत् तदिदं भीतैः क्षेत्रनिमायनं नियताकारत्वमेव ह्येकत्वमनियताकारत्वमनेकता तन्निवृत्तौ च न नीलाकारं नापि नीलपीताद्याकारमित्यनाकारमेवावशिष्यते ।

स्यादेतत् पारमार्थिको विरुद्धधर्म्माध्यासो भेदहेतुरयं काल्पनिकइति चेत् एवन्तर्हि सुतरामयत्नसिद्धं स्फटिकवद्बोधस्य निराकारशुद्धत्वम् आकारनिकरस्यानात्मैव स्फुरतोप्युभयथैव कालात्ययापदिष्टाः सहोपलम्भादयः । अपि च आस्तां तावद्विरुद्धधर्म्माध्यासचिन्ता योऽयं ग्राह्यग्राहकभागभेदो ग्राह्यनीलादिभेदो वा चकास्ति स किं सत्यो असत्यो वा सत्यत्वे सएव दोषो हेतूनाम् असत्यत्वे नायमात्मा विज्ञानस्य इत्यनात्मन्यपि सहोपलम्भनियमाद्योग्यता इत्यनेकान्ताः । भेदो न प्रथतएवेति चेत् एवं तर्हि अस्तु तावत् सर्व्वजनीनप्रतीतिविरोधः स्ववाग्विरोधो वा । असिद्धास्तर्हि हेतवः नहि भेदाप्रथने सहार्थं तद्वाप्यतां वा पश्यामः तदस्फुरणेऽपि

पक्षादिप्रविभागोपि कथं कथं बोधयितुं प्रवृत्तोऽसि किमर्थञ्च
अन्वयव्यतिरेकाप्रतीतौ किञ्च हेतोर्बलं कुतश्च विप्रतिपत्तिः कीदृशी
चेति सोऽयं विचारमारभते भेदन्तु साम्प्रतमपि नेच्छति नूनमुन्म-
त्तोप्यनेन जितः विकल्पारूढ एव भेदोऽध्यवसायारूढं नानुभवारूढ
इति चेत् सोपि सत्योऽसत्योवा भासते न वेति विकल्पजालं नातिवर्त्तते ।
असन्नेवास्फुरन्नेवाध्यवसीयत इति चेत् अध्यवसीयत इति विवरणार्थं
मेतत् तद्विषयव्यवहारजननमध्यवसायार्थं इति चेत् व्यवहारोपि
यद्यज्ञानरूपः कथमसंस्तेनजन्यतां ज्ञानरूपश्चेत् कथं नियामकं
विना तद्विषयः स्वकारणसामग्रीसामर्थ्यादिति चेत् सोऽयं व्यवहृति
रूपज्ञानालीकभेदयोर्नियामकान्तराभावेपि कारणसामर्थ्यमाश्रित्य
विषयविषयिभावमिच्छति नत्वनुभवानुभाव्ययोरिति क्षीरं विहाय
रुचिररोचकग्रस्तस्य सौवीरे भेदोपि विकल्पाकार एव न तु बाह्य
इति चेत् यद्यसन्नेवासौ कथं विकल्पाकारः तदाकारश्चेत् कथमस-
न्निति परिभावय। अस्तु तर्हि सन्नेवेति चेत् नन्वद्वयदर्शि चेत् वि-
ज्ञानं कथं भेदप्रथा आकारद्वयदर्शि चेत् कथमेकं सद्द्वयात्मकम् ।
चित्राकारमिति चेत् चित्रमेकमनेकं वेति विकल्पगिलितमेव तव
पश्यतः अनेकत्वे क्व एकविज्ञानतादात्म्यं विज्ञानस्यापि यावदाकार
मनेकत्वे क्व चित्राकारसम्वेदनं स्वसमाप्तप्रत्वात् एकत्वे क्व भेद
प्रतीतिः । अनीलाद्यनेकव्यावृत्तितोऽनेकत्वाध्यवसाय एवेति
चेत् अतादात्म्ये कथं व्यावृत्तीनामुल्लेखः तादात्म्ये कथमनेकत्वं एक-
त्वेपि क्व तत् ततोपि भेदाध्यवसायः । उल्लेखोयमस्य विज्ञानस्य
यदनेकत्वं नाम न पुनस्तत्वान्तरमिति चेत् स्वरूपमस्वरूपम्वेति वाच्यं
आद्ये अनेकस्वरूपमेकमिति कोऽन्योवदेदमुष्मात् द्वितीयस्त्विष्यत-
एवास्माभिः। किन्तु त्वयेष्यतां भ्रान्तिरसाविति चेत् तस्यामपि
स्वरूपमस्वरूपं वा प्रकाशेत प्रकारान्तराभावादिति। स्यादेतत्
यथा तत्तया परिस्फुरदपि न वस्तुगत्या तदेव तथा तदप्यतत्तया

परिस्फुरदपि नातदेव ततः स्वरूपस्यातत्तया प्रथनेपि न काचिद् ग्राह्यलक्षणक्षतिरिति चेत् यद्यतत्तापि विस्फुरन्ती स्वरूपमेवास्य स्यात् स्यादप्यस्योपन्यासस्य प्रस्तुतोपयोगः । असरूपस्य कथं प्रकाश इति यद्यपि तथा वक्ष्यामः तथाप्यतत्ता कथं तस्य स्वरूपमिती-तोपि दीयतां दृष्टिः । कथास्वरूपस्फुरणे दोषः नायं भिन्नयोर्वेद्य वेदकभावो व्यापारनिबन्धनो नियतस्य तस्याभावात् । नापि जाति निबन्धनः कश्चित् सोयइति अवस्थानुपपत्तिप्रसङ्गात् । नहि निसर्गसिद्धानां गोत्वादीनामीदृशी रीतिरिति चेत् नन्वयमभेदेपि दोषस्तदवस्थएव । तथा हि स्वस्य वेदनमिति नायं व्यापारनिबन्धनो व्यवहारः स्वात्मनि तदभावात् । नापि जातिनिबन्धनः साधारण्य प्रसङ्गात् । नहि जात्यैव गौः स्वात्मानं प्रति नतु परं प्रतीति नियमो दृष्टः । नच ज्ञानं स्वस्येव परस्यापि वेदनं सर्व्वसर्व्वज्ञत्वा-पत्तेः । न तत् कस्यचित् किन्तु वेदनमात्रमिति चेत् तथापि स्वात्मन्यजडवत् परत्राप्यजडं स्यात् परस्मिन्नन्धवद्वा स्वस्मिन्नप्यन्धं प्रसज्येत जात्यैव तद्रूपत्वात् । जात्यापि स्वकारणात् क्वचिन्नियत रूपमेव तदुत्पन्नमिति चेत् । नैवमुच्चैर्गाः परैरपि कदाचिदेवं श्रूयेत । अभेदोऽस्तु मा वा भेदस्तु प्रकाशमानत्वेन व्यासेधामइति चेन्न वस्तुनि भेदनिवृत्तेरेवाभेदरूपत्वात् ।

अस्तु तर्हि भेदाभेदविधुरमेव चित्रं चेतोभेदे प्रकाशस्या योगात् अभेदे चित्रत्वानुपपत्तेरिति चेन्न मिथोविरुद्धविधिद्वयविधि वत् तदुभयनिषेधस्याप्येकत्रविरुद्धत्वात् । नच सोऽप्यस्त्विति वाच्यं स्याद्वादावतारे तथापि दिगम्बरत्वप्रसङ्गात् । अस्तु तर्हि चतुः शिखरीशून्यमेव चित्रमाश्चर्य्यरूपत्वात् । एकानेकत्वविरहेपि सत्व मित्याश्चर्य्यार्थो हि चित्रशब्दइति चेत् । अथ चतुःशिखरशेखरमेव किन्न स्यात् आश्चर्य्यरूपतायुक्तेस्तुल्यत्वात् । एकैकपक्षानुपपत्तिश्च यथा तन्निषेधपर्य्यवसायिनी तथा तद्विधिपर्य्यवसायिन्यपीति ।

अपि चान्न वस्तुतश्चतुःकोटिविरहे चेतसो भावान्तरेणेदमुक्तम्। यदनात्मान एवैताश्चतस्रः कोटयो भासन्ते नवा प्रतिभान्तीति तथा प्रतिभानमनुत्तरम्। प्रतिभाने तु ग्राह्यलक्षणायोगेऽपि ग्राह्यभाव इति चेत एवमेतत्। यथा च चित्राद्वैतादरं चित्रद्वैतमस्तु प्रति-भासनानुरोधादिति। स्यादेतत् बहिरन्तरुभयथापि ग्राह्यलक्षण क्षतिरस्तु प्रकाशमानत्वन्तु नीलादीनामप्रत्याख्येयं तावन्मात्रञ्चा-स्माकमभिमतमिति चेत् तदेतद्विशीर्णगवीरक्षणम्। किमिदं हि प्रकाशमानत्वं यत् सर्व्वथा ग्राह्यलक्षणाक्षतावपि न ज्ञेयं न प्रकाश सम्बन्धो नियमानुपपत्तेरित्युक्तं न प्रकाशतादात्म्यं चित्रत्वानुपपत्ते-रित्युक्तम्। तस्मान्नीलादीनां प्रकाशमानत्वं परिपालयता ग्राह्य लक्षणे यत्नः कर्त्तव्यः परिहर्त्तव्यं वा प्रकाशमानत्वं अन्यथा तप-नीयमपनीय वाससि ग्रन्थिकर्त्तारमुपहससि स्वयञ्च कनकमुपादाय गगनाञ्चले ग्रन्थिं करोषीति। सेयं सर्व्वप्रकारमसिद्धिः सर्व्व-प्रकारञ्चानैकान्तिकमिति।

एतेन द्वितीयः पक्षः प्रत्युक्तः। नहि सजातीयत्वेन ग्राह्य लक्षणवैधुर्य्यमुत्सार्य्यते अतिप्रसङ्गस्य तादवस्थ्यात् जडत्वप्रकाशासम्भा वनेवेति चेन्न तुल्यत्वात्। यथाह्यस्वसम्वेदनवादिनः परं प्रति प्रकाश मपि ज्ञानमात्मनि जडमेव तथा स्वसम्वेदनमात्रवादिनोऽपि स्वात्मनि प्रकाशमपि ज्ञानं परं प्रति जडमेव कथञ्चिद्‌ज्ञानान्तरेऽप्यजडञ्चेत् बाह्येऽपि तथा किन्न स्यादिति सन्दिग्धविपक्षवृत्तित्वम्। ननु बाह्ये सर्व्वथैव ग्राह्यलक्षणक्षतिः इह तु समानोपादाननियमेन चित्रा काराणां परमार्थभिन्नानामेव व्यतिवेदनसिद्धिः। न मिथः प्रथा नियमे ह्युपादानमुखेन सामान्यतो वा सामग्रीसामर्थ्यमेव वक्तव्यम् अन्यथा तथाविधकार्य्यानुत्पत्तेः। तथा च बाह्यग्राह्यनियतस्वभाव ज्ञानोत्पत्तावपि सुलभमेतदिति पूर्व्वकथ एव दोषः। अस्तु तर्हि तृतीयः सर्व्वथा ग्राह्यलक्षणानुपपत्तेः तदभावे सामग्रीसामर्थ्यं स्यात्स्वपितु

मशक्यत्वात्। विचारसिद्धे हि वस्तुनि कारणचिन्तनावसरो नत्व विवेचित इति चेत् किं ग्राह्यलक्षणा निर्वक्तव्या प्रकाशमानत्वममीषां निवर्त्तते सत्त्वं वा। न प्रथमः नहि लक्षणापरिज्ञानमात्रेण स्पष्ट दृष्टमपि लक्ष्यमपह्नोतुं शक्यते लक्षणपरिज्ञानस्य दुरूहत्वेनाप्युपपत्तेः। तेषामप्रतिभासे तन्निषेधस्यानुपपत्तेः। न द्वितीयः तदा हि तल्ल-क्षणानुपपत्तिः सत्त्वं निवर्त्तयेत् यद्यसत्त्वे लक्षणमुपपद्येत उभय-थाप्यनुपपत्तौ कोऽनुरागोऽसत्त्वे। तदेव लक्षणमिति चेत् सत्त्वमेव किन्न स्यात् अतिप्रसङ्गादिति चेत् तुल्यम्। वेदनाधीनव्यवहार गोचरत्वमिति चेत् अस्तु तावदिदं तस्यैवेति तु नियमः कुतः। सामग्रीतथता वेदनोत्पत्तिरिति चेत् तदेतत् सम्भाव्यते सति न त्वसतीति विशेषः। यथा हि सति ज्ञानेनाभिलाषः तेन यत्नस्तेन प्रवृत्तिः तया तत्प्राप्तिः क्रियते न तथा अलीके तस्य प्राप्तुमशक्य त्वात् प्राप्यत्वे वानलीकत्वात्। व्यवहारोऽप्ययमलीकइति चेत् तर्हि सुतरां लक्षणाभावः तद्वारस्याप्यभावात्। अस्तु तर्हि सर्व्वथा विचारासहत्वमेव विश्वस्येति चेत् तत् किमिदानीं तत्त्वोपप्लव एव काष्ठाशून्यता वा न प्रथमः इयतीं भूमिमारूढस्यापि वि-चारस्य निष्फलतायां प्रमाणाभावात् भावे वा कथं तत्त्वोपप्लव स्यैव विचारस्यानुपप्लवात्। तत्समानन्यायस्यान्यस्यापि तथाभाव प्राप्तेः निष्फलत्वाच्च। न ख्यातिप्रवृत्तिः फलं गगनास्वादनेना-प्तेः अलीककलापाभिषङ्गेन तापानपनोदात्। नाप्यतिनिवृत्तिः जडीभावमात्रेऽप्युपनिपातिदुःखानिवृत्तेः। नच दुःखमपि विचारा सहमित्यहेयमेव तथाविधस्य विचारेऽप्यनधिकारात्। नापि यथा लोकं व्यवस्थितिः विचारात् प्रागपि तस्याः पामरादिवदयत्नसिद्धेः। नापि परलोकमात्रनिवृत्तिः तस्यैहिकतुल्यत्वात्। दृश्यते हि तावदयमिति चेत् यदि ज्ञानवचनोऽहमस्मि तदा परोऽपि तथा साक्षात् कारवचनश्चेत् इहैवानुमानादेव प्रवृत्तिप्रसङ्गः। तदपि प्रत्यक्ष

मिति चेत् आमुष्मिकमपि प्रत्यक्षमेव तुल्यकक्षत्वात्। अश्रद्धेरेव तत्र न प्रवृत्तिरिति चेत् तथापि किं विचारेण तमन्तरेणापि तस्याः सुलभत्वात्। तामेवायं पुष्णातीति चेत् अविशेषादिहापि पुष्णीयादिति। सोऽयं पवनतनयवाचमनुपश्रुत्य तत्सदृशो वा वानरः कियदपि दूरमुत्प्लुत्य महार्णवे पतितः प्राह अपार एवायमकूपारो मिथ्या रामायणमिति तत् किमनेन एवं ज्ञातुं निर्व्वक्तुं वा न शक्यते। कीदृशं जगदित्येतावन्मात्रमपि पामरदशावच्छिन्नफलमेव। नच निष्फलत्वेपि श्रद्धेयमिदं तावत् परामर्शपाटवाभावेनाप्युपपत्तेः। नहि जात्यन्धोऽनीलं ज्ञातुं निर्व्वक्तुं वा न प्रभवतीत्येवा-निर्व्वाच्यमेव तल्लोकइति।

अस्तु तर्हि शून्यतैव परमं निर्व्वाणमिति चेन्न साहि यद्यसिद्धा कथं तदवशेषमपि विश्वमभिधीयते वाङ्मात्रस्य सर्व्वत्र सुलभत्वात् परतश्चेत् सिद्धा परोऽप्युपगन्तव्यो यात्मलक्षणतावर्ण्णनीयमिति। सच परो यदि संवृतिरेव विश्वशून्यतयोर्न कश्चिद्विशेषः कथं तदप्यवशिष्येत। असंवृतिरूपश्चेत् परः परतएव सिद्धा बलवता स्वयमसिद्धश्चेत् कथं शून्यत्वमपि साधयेत् स्वतःसिद्धश्चेत् आयातोऽसि मार्गेण। तथाहि स्वतः सिद्धतया तदनुभवरूपं शून्यत्वादेव च न तस्य कालावच्छेद इति नित्यम्। अतएव न देशावच्छेदइति व्यापकम् अतएव तन्निर्धर्म्मकमिति विचारात्पूर्वं तस्य धर्म्मधर्म्मिभाव मुपादाय प्रवृत्तेः। अतएव विशेषाभावइत्यद्वैतं प्रपञ्चस्यापारमार्थिकत्वाच्च निष्प्रतियोगिकमिति विधिरूपम् अविचारितप्रपञ्चापेक्षया तु शून्यमिति व्यवहारः। तथापि प्रपञ्चशून्यस्यानुभवमात्रस्य प्रपञ्चेन कः सम्बन्धः। नच नायं प्रकाशतइति चेत् वस्तुगत्या न कश्चित् संवृत्या तु गगनगन्धर्व्वनगरयोराधाराधेयभावइव विषयविषयिभावः सच यथा नैयायिकैः समर्थयिष्यते तथैव वेद्यनिष्ठत्वसावच्छिन्न दर्शनइति विशेषः। अविद्यैव हि तथा तथा विवर्त्तते यथा यथा-

नुभाव्यतया व्यवह्रियते तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति गगनमिव स्वप्नदृष्टघटकटाहकोटर कुटीकोटिभिः । तदास्तां तावत् किमाद्यं कथमिदमवच्छिन्नचिन्तयेति तस्मादनुभवव्यवस्थितौ अनात्मापि परिस्फुरतीत्यवर्ण्णनीयमेतत् । तत्सिद्धौ तत्त्वत्रयमपि सिद्धिदस्यैवं । तच्च बाह्याविरोधे ज्ञाना-नित्यतायां तन्निष्ठमुभयनिष्ठं वा बाह्यविरोधे ज्ञाननिष्ठमेव तन्नित्य-तायां ग्राह्यनिष्ठमेवेति । तथाहि यस्तावदत्र विषयविषयि भावः स च प्रकाशस्य तत्तदीयतामात्ररूपः स्वभावविशेषः । स्वभाव त्वादेव च नोपकारान्तरमपेक्षते तन्मात्रीयत्वादेव च नान्यदीयः । किमस्य फलमिति प्रश्नप्रसङ्गेपि बहिस्तद्गोचरव्यवहारप्रवृत्ति-रन्तरमपि तेन ज्ञाननिरूपणम् । कुतोऽयमीदृगित्यनुयोगेऽपि सामग्रीप्रसिद्धिरेवोत्तरं कार्य्यकारणवत् अन्यथा तत्राप्युपकारान्तरा-पेक्षायामनवस्था तदनपेक्षायां वा साधारण्यं केन वार्य्यं तेन तदेव क्रियते अनेनाप्य तदेव विषयीक्रियतइति विवेचनीयं । विषयीक्रियते इति कोऽर्थः क्रियतइत्यपि कोऽर्थः इत्यपि विचारणीयं कार्य्योत्पादन मेव करणं तदीयतोत्पत्तिरेव विषयीकरणमिति विवेचनीयम् । उप कारस्तु यथात्र विज्ञानस्वरूपातिरिक्तो नास्ति तथा तत्रापि कार्य्य स्वरूपातिरिक्तोनास्तीति प्रतिसन्धेयमिति । अतएव कार्य्यकारण भावोप्युपेक्षितव्य इति तु महत् साहसं तथा सति हि स्यादेव न स्यादेवेत्याद्यापद्येत । तथा च प्रकाशतत्त्वयोरन्यतरस्य कौटस्थ्य प्रसङ्गः । सान्वृतोऽस्त्विति चेत् विषयविषयिभावोऽप्येवमस्तु यदि विषयकार्य्ययोर्बलवतीबाधेति दर्शीगतिः । तदत्र तत्त्वं न तावदुभय निष्ठं सत्त्वं सतोऽसतो वास्थिरस्यापि स्फुरणात् नच ज्ञाननित्य तायां पारमार्थिकबाह्यनिष्ठं सत् कार्य्यवादष्टान्तैः सांख्यप्रक्रिया विध्वंसनात् । न खलु पूर्व्वपूर्व्वतिरोभावाविर्भावावन्तरेण विचारस्या-प्यवसरः । नाप्यलीकग्राह्यतायां तन्निष्ठज्ञाननिष्ठम् इति तुच्छस्य

विशेषाभावात् ज्ञानस्य निराकारत्वात् । अन्यथाप्यसिद्धेरारोप-
यितुमशक्यत्वात् । असन्त एव विशेषाः प्रकाशन्तीति चेन्न असन्त
इति स्वतन्त्राः अतद्रूपा इति वा अकिञ्चिद्रूपा इति वा नियत
व्यावृत्तिमात्ररूपा इति वा प्रथमे बाधदेशान्तरयोः सत्त्वप्रसङ्गः
द्वितीये त्वविशेषता तृतीये नीलस्यालीकस्यानीलव्यावृत्तिरूपतायां
मनीलानां पारमार्थिकत्वप्रसङ्गः तेषामलीकत्वे तद्व्यावृत्त्यात्मनो
नीलस्यानलीकत्वापत्तिः तथाप्यलीकत्वे अविशेषत्वं तेनरूपेणावि-
शेषत्वमिति चेत् । अथ विशेषः केन नीलपीतादिनेति चेत् तत् किं
ततोऽधिकम् अनलीकं तर्हि स्यात् अनधिकञ्चेत् कुतस्तेनापीति
वासनावशाद्विशेषाः स्फुरन्तीति चेत् स्फुरन्तु कः खल्वत्र विप्रति-
पद्यते ते तु नीलादयो यद्यकिञ्चिद्रूपाः कथं विशेषाः तदितररूपेणा
किञ्चिद्रूपत्वे तेन रूपेण किञ्चिद्रूपा एवेति ब्रूमः । विचारासहता
मात्रमलीकत्वमिति चेत् तथापि भाषापरिवर्त्तमात्रं विचारासह-
तायाः किञ्चिद्रूपत्वविरोधित्वात् अविरोधे वा तद्विचारसहता
अपि किञ्चिद्रूपा एव नीलादय इति विचारस्य दुर्विचारत्वप्रसङ्गात्
तेन नीलादीनां छायामात्रस्याप्यनाक्रान्तेः प्रविश वा अनिर्वचनीय-
ख्यातिकुक्षिं तिष्ठ वा मतिकर्दममपहाय न्यायनयानुसारेण नीला-
दीनां पारमार्थिकत्वे तस्मात्

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनये जयश्रीः ।
नोचेदनिन्द्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः ॥

तच्चालीकं विचारासहमनिर्वचनीयं वा यमाश्रित्य जगन्निन्द्ी-
यते स एव विचार्य्यतां कोऽसौ कीदृशश्चेति । सतर्कप्रमाणमेव
वाक्यारूढमिति चेत् तच्चेद्विचारासहं किं तेन भीतविचारकल्पेन
तथाहि केनचिद्भीतेन राजद्वारि चिरदमालोक्य विकल्पितं किमयमन्ध
कारो मूककर्णस्त आहोस्विज्जडवाचोवचाकान्तः वर्षति गर्ज्जति च ।
यदा बान्धवोऽयं राजद्वारे श्मशाने च यस्तिष्ठति स बान्धव इति पर-

मात्रार्थवचनात्। अथवा योऽयं भूमौ दृश्यते तस्य च्छायेति दूषितञ्च
तत्र नाद्यः तस्य सूर्य्ययुगपत्प्रस्फोटनाभावात्। न द्वितीय स्तस्य स्तम्भ
चतुष्टयाभावात्। न तृतीयः तस्य चतुरङ्गनामयाभावात्। न चतुर्थः
तस्य नरशिरः प्रतोद्धरणाभावात् ततो न किञ्चिदिदमिति किमेता-
वता विरदस्व्यं निवर्त्तताम्। यद्वा वरमेतस्मात् योऽयं सोऽयमिति वादी
द्वितीयोऽभीतः तद्विचारस्तदमिति चेत् एवं तर्हि स्वयमेव विलीनम-
लीकादिवादैः। नोत्तरप्रतिज्ञामपि लोकसिद्धमिति चेत् तर्हि तस्य
परिकरशुद्धिरपि तथैव ग्राह्या अन्यथा लोकस्यापि व्यतिक्रमे विचार
स्य यादृच्छिकवाक्यात्मत्वापत्तेः लोके चाकाङ्क्षायोग्यतासन्निमत्तया
प्रतिसंहितमभिमतार्थं प्रमाणान्तराप्रतिहतं स्ववचनस्वक्रियास्वज्ञान
स्वागमादिदोषरहितं स्वार्थप्रतिक्षेपकयुक्तेरनाक्षेपकं वाक्यमर्थप्रति-
पत्तेरङ्गं यथा पर्व्वतोऽग्निमानिति। अनङ्गमितरत् यथायं पर्वतो
देवदत्तो गौरइति जलहृदोवह्निमानिति। गिरिर्देवदत्तेन भुक्त
मग्निमानिति श्वेतोहिस्यो धावतीति प्रष्टो विषाणीति माता बन्ध्येति
अहं मूकइति इमं न जानामीति। मम कर्णौ प्रविश्य गजोगर्ज्जति
भेषजमुच्यतामिति तदर्थः साधनं दूषणञ्च।

तत्र साधनं व्याप्तिपक्षधर्म्मतोपयिकरूपपञ्चकोपेतं लिङ्गं यथा
विशिष्टधूमवत्त्वादिति लिङ्गाभासमितरत् यथा जलाश्रयत्वादिति।
तत्परिकरश्च तर्कः सोऽपि व्याप्तिबलमालम्ब्यानिष्टप्रसङ्गरूपः।
अनिष्टञ्च द्विविधं प्रामाणिकपरित्यागोऽप्रामाणिकपरिग्रहश्च। यथा
यद्युदकं पिपासा दुःखं न शमयेत् न पीयेत् यदि च तदेवपरमन्त-
र्द्दहेत् तदविशिष्टं मामपि दहेत्। इतरस्तु तर्काभासः यथा यदि
जलं पिपासादुःखं नाशमयिष्यत् रूपवदपि नाभविष्यत् यथाकाशम्।
यदि च तदेव पवमन्तरधक्ष्यत् मामपि सुरभिमकरिष्यदिति।
दूषणमपि स्वप्रतिक्षेपकयुक्तेरनाक्षेपकं दृष्ट्यां साधकत्वाविनाभूतं
सिद्धञ्च यथाग्निमत्त्वे साध्ये प्रमेयत्वमनैकान्तिकत्वादहेतुरिति

अन्यथा तु तदाभासो यथायं धूमो नाग्निसाधकः सर्व्वथानुपलभ्य-
मानोपाधिग्राह्यत्वात् प्रमेयत्वात् विपक्षत्वाच्चेति । इयदपि
प्रमाणमनुमानच्छाययैव विचाराङ्गं तर्कमनन्यथासिद्धिञ्च पुरस्कृत्य
प्रवृत्तेः ततस्तथाप्येषैव रीतिरनुगन्तव्येति ।

एवं व्यवस्थिते लोकव्यवहारे साधनोपक्रमेण यदि विचार-
यसि प्रतिज्ञैव तावन्नाङ्कुरं धारयति । तथाहि न किञ्चिदस्ति
न किञ्चित् सत्यं न किञ्चित कारकं न किञ्चित् विचारसहं
न किञ्चित् सालम्बनं न किञ्चिद्दर्शनं न कश्चित् सिद्धान्त इत्यादौ
स्वार्थप्रतिक्षेप एवावदुर्व्वारः । प्रतिज्ञापि हि न स्यात् न सत्या
न कारिका न विचारसहा तद्विज्ञानमपि न सालम्बनं तत्
फलमपि न दर्शनं तदर्थोपि न सिद्धान्त इत्यापद्येत । इष्यत
एवेदमिति चेन्न इच्छामात्रेण व्याघातानिवृत्तेः । यदि हि न नास्ति
किञ्चिदस्तीत्यादिप्रतिज्ञार्थः प्रतिज्ञां स्पृशेत् कथमयमर्थः प्रत्येतव्यः
नचेत् कथं सानुपपन्ना तदुपपन्नत्वे च कथं पुनः प्रतिज्ञार्थ उपपद्यते ।
तदिदमायातं स्वविषमूर्च्छिता भुजङ्गी आत्मानमेव दशतीति ।
तदतइति विशेषणादयमदोषइति चेत् तद्विचारो वा स्यात् लोक
मर्य्यादातिक्रमो वा । प्रथमः पूर्वमेव निरस्तः तस्य प्रतिज्ञारूपतया
कुलीरस्येव स्वप्रसूतपुत्रापत्येनैव प्रतिहतत्वात् द्वितीये तु स्वच्छाया-
तिक्रमवत् सएव व्याघातः । यदि हि लोकमर्य्यादातिक्रमो न विचार
स्वरूपस्थितिः तत्स्वरूपस्थितिश्चेन्न तदतिक्रमइत्यर्थः प्रतिषेध्यासिद्ध्य
सिद्धिव्याघातश्च । यदि हि प्रतिषेध्यं सिद्धं नात्यन्ताय प्रतिषेधः न
चेन्नतराम् । लोकव्यवहारसिद्धमिति चेत् सिद्धमेव हि तर्हि नह्य-
न्यतोऽपि किञ्चित् सिध्यति । नायमबाध्योव्यवहार इति चेत् यदि
नैकत्र अन्यत्रापि तथाभावप्रसङ्गात् सर्वत्रबाध्यतइति चेत् तदपेक्ष
सिद्धिना व्यवहारेणानपेक्षेण वा अव्यवहारेणैव वेति यस्तावत्तदपेक्ष-
सिद्धिः स कथं तमेव बाधेत नह्यनुष्णत्वानुमानेनोष्णत्वग्राहिप्रत्यक्ष

बाधाबाधे द्वितीयस्त्वसम्भवी नहि निषेधकं प्रमाणं निषेध्यसिद्धि
निरपेक्षं भवितुं लभते तृतीये तु तद्विपरीतापत्तिः विचारबाध्यत्व
मुपक्रम्याविचारबाध्यत्वेन दर्शनात् । नन्वेतदपि निर्व्यूढं स ह्य
यमसिद्ध मसत्त्वं वा स्यात् अविच्छिन्नं वा आद्ये विरोधोऽसिद्धिश्च
द्वितीये लोकातिक्रमः प्रत्यक्षानिष्टत्वादनिष्टिबाधप्रसङ्गश्चेति एतेन
हेतवो निरस्ताः ते हि ज्ञेयत्वात् ज्ञातत्वात् असत्त्वात् विकल्पानुप-
पत्तेः प्रत्ययत्वात् कार्य्यानुपपत्तेः मिथोव्याघातादित्यादयः एते हि
सर्व्वएव स्वार्थक्रियाप्रतिक्षेपिकां युक्तिमाक्षिपन्ति निषेध्यसिद्धिञ्चा-
पेक्षन्ते अनैकान्तिकौ च प्रथमद्वितीयौ स्वपक्षएव व्यभिचारात्
असिद्धौ तृतीयचतुर्थौ अनैकान्तिकश्च पञ्चमः पूर्व्ववत् असिद्धो
व्याघातेनानैकान्तिकश्च षष्ठः असिद्धो अनैकान्तिकश्च सप्तमः सर्व्व-
एव कालात्ययापदिष्टाइति ।

एतेन दृष्टान्ता अपि निरसनीयाः ते हि रज्जुसर्पवत्
तज्ज्ञानवत् मायाविमायावत् दर्पणमुखवत् स्वप्नप्रत्ययवत् छेद्यानुपपत्तौ
छिदावत् मिथः शोषकनिर्वापकानलसलिलवदित्यादयः । येन
च तत्र सर्पस्यासत्त्वं तज्ज्ञानस्य मिथ्यात्वं मायाविमायस्याकारकत्वं
दर्पणमुखस्य विचारासहत्वं स्वप्नज्ञानस्य निरालम्बनत्वं छेद्यानुप-
पत्तौ छिदानुपपत्तिश्चावधारितानि तेनैव तत्र रज्जोः सत्त्वं असर्प-
ज्ञानस्य सत्यत्वं प्रयत्नान्यत्र गवादेर्विमायाएव कारकत्वं दर्पणस्य
विचारसहत्वम् अस्वप्नज्ञानस्य सालम्बनत्वं छेद्यनिष्ठा छिदा सिद्धौ
ज्ञानकर्म्म चोपपादितानि तदनुपपत्तौ वा साध्यविकलतया सर्व्वएवै
ते दृष्टान्ताभासाः अन्तिमस्तु साधनविकलः सिद्धान्तानां व्याघातः
परस्परविरुद्धरूपावलम्बः अनलसलिलयोस्तु वध्यघातकस्वभावत्व-
लक्षणः नच शब्दसाम्येनानुमानमित्येषा दिक् ।

अस्तु तर्हि दूषणोपक्रमेण विचारइति चेत् तमपि पृच्छामः
कीदृशोऽसाविति नेदं स्वयं निरुक्तधर्म्मासंसर्गप्रसङ्गात् नाप्यन्यं

तथा प्रतिभासप्रसङ्गात् न परानपेक्षं सदसद्व्यतिरेकप्रसङ्गात्
नैकं तथा प्रतिभासप्रसङ्गात् । नानेकं भेदव्यवस्थितिप्रसङ्गात्
न च व्यापकं निष्क्रियत्वप्रसङ्गात् नाव्यापकं अविधेयत्वप्रसङ्गादि-
त्यादिरिति चेन्न मिथोविरोधमूलयोर्विध्येकापादनानुकूलत्वविपर्य्य-
यापर्य्यवसानैकाभासत्वात् । यथा हि नायं पर्व्वतो निरग्निः
निर्धूमत्वप्रसङ्गात् नाप्यग्निमान् तथोपलब्धिप्रसङ्गात् इत्यनयोरेक
आभासः परस्पराप्रतिक्षेपकयोरुभयोरनाभासत्वानुपपत्तेः । तथा-
ऽत्रापि नह्यस्थूलादिनिषेधादन्यः स्थूलादिविधिः तन्निषेधाद्वान्योऽ-
स्थूलादिविधिरिति । विधिनिषेधमूलाश्चेत् प्रतिबन्धस्यासिद्धेः सिद्धौ
वा व्याप्यव्यापकतदधिकरणानां सिद्धौ विवादनिवृत्तेः इष्टापादनञ्च
प्रथमे अनुभूतावसिते स्थूले विरुद्धधर्म्मासंसर्गस्येष्टत्वात् तथा च
वक्ष्यामः । अनुकूलञ्च द्वितीयः अस्थूलताप्रतिक्षेपस्य स्थूलोप-
लम्भानुग्राहकत्वात् तद्रूपताव्यवहारस्य तथा प्रतिभासव्याप्तत्वाच्च
एवं तृतीयोऽपि अनपेक्षत्वप्रतिक्षेपस्य सापेक्षत्वोपलम्भानुग्राहक-
त्वात् अपेक्षत्वविधेः सदातनत्वव्याप्तत्वाच्च । चतुर्थस्त्वप्रसिद्धव्यापकः
सदसत्त्वस्य विरोधेनैकत्र विधिवत् निषेधस्याप्यनुपपत्तेः । पञ्चमस्तु
अनुकूल एव अनेकत्वाभिमते वस्तुन्येकताप्रतिक्षेपस्यानेकतोपलम्भो-
पलम्भकत्वात् तद्रूप्यव्यवहारस्य तथा प्रतिभासव्याप्तत्वाच्चेति षष्ठ-
स्त्विष्ट एवास्माकम् । ननु भेदः स्वरूपं वा स्यात् इतरेतराभावो
वा धर्म्मान्तरं वा । न पूर्व्वः घटो भिन्न इतिसहप्रयोगानुपपत्तेः ।
नापरः प्रतीतावात्माश्रयप्रसङ्गात् भिन्नप्रतियोगिनिरूपणाद्धि तद-
भावो निरूप्य तन्निरूपणमेव च भेदनिरूपणं नोत्तरः अनवस्था
प्रसङ्गात् । तत् कथमसौ भवतु इष्यतामिति चेत् तत् किं भेद
ज्ञानमेव नास्ति सदपि वा नित्यं अनित्यमपि वा निर्हेतुकं सहेतुक
मपि वा निर्व्विषयकं सविषयकमपि वा बाध्यमानविषयकमिति ।
तत्र प्रथमः सर्वतो विरोधादुत्तरः द्वितीयः सुगतव्यवस्थानुरोधादु-

पेक्षणीयः तृतीयोपि विरोधाद्धेयः चतुर्थस्तु भेदोक्तत्वादेव त्याज्यः
पञ्चमन्तु चिन्त्यते किमितोऽन्यतमात्मा अस्य विषयः तदन्यो वेति तत्र
यद्यन्यतम एव किमेताभिरधिकरणानुपपत्तिभिस्तस्य बाध्येत एवं हि
चौरापराधेन व्यक्तमयं माण्डव्यनिग्रहः स्यात् । अथान्यतमात्मा
तथापि यदि धर्मान्तरमेवेति सत्यं तदानवस्थाभिया तदधिक एव
प्रवाहः त्यज्यतां तस्य कुतस्त्यागः नह्यनवस्था प्रतिभासमानमर्थं
निवर्त्तयति किन्तु प्रवाहं परिकल्पयति गन्धे गन्धान्तरवत् अथेतरे-
तराभावमेव भेदज्ञानमवलम्बत इति सत्यं तथापि ह्यात्माश्रयः तेन
हि भेदज्ञानमेव न स्यात् । अस्ति च तत् ततो हेत्वन्तरमाक्षिपेत्
ननु आत्मनि स्वयमहेतुत्वे स्वयमेव निवर्त्तते अविद्यावशादिति चेत्
किमायातः नह्य विद्येत्येवमात्माश्रयनिवृत्तिः तथासति घटादयोपि
कुलालादिनिरपेक्षाः स्वयमेव भवेयुः । अथात्माश्रयदोषापहतया
तत्र स्वस्यैव कारणं ततो यतः कुतश्चित् तस्य जन्म तच्च दुर्निरूपमतो
ऽविद्येत्युच्यतइति विचारार्थः । नास्ति तर्हि विवादः नच तदपि
दुर्निरूपं प्रतियोगिरूपत्वेनाप्रतीतावधिकरणाप्रतीतिरधिकरणास्वभाव
त्वेनास्मृतौ प्रतियोगिस्मृतिस्तेतरेतराभावप्रत्ययकारणमिति निरूप-
णात् । अथ स्वरूपमेव भेदप्रतिभासस्य विषय इति सत्यं तथापि
सहप्रयोग एवानुपपन्न त्यज्यतां भेदेन तु किमपराद्धं सोपि दृश्यत
इति चेत् सत्यं नैमित्तिकस्तु स्यात् न तु स्वरूपतः नहि घटमानय
पटमवलोकयेत्यादौ भेदपदमपि प्रेक्षावानुपादत्ते व्याख्यायान्तु मूढ
प्रबोधनाय घटः कुम्भइतिवत् सहप्रयोगेपि न दोषः तथापि कः पर
मार्थः यथायथं वयमपि पटस्य हि घटात्मना प्रतीतिरघटात्मना
च प्रतीतिस्ततो वैधर्म्यप्रतीतिरेवेत्यनुभवसिद्धं तथाभावस्य प्रथम
मात्रं अभावान्तरधर्मान्तरयोरभावात् सामान्यादिषु त्रिषु स्वयं
धर्मान्तराभाववत् द्रव्यादिषु त्रिषु स्वयं चयस्यापि सम्भवात् । भवति
पटोऽयं न घटस्तन्तुमयत्वेति गन्धोऽयं [illegible] रूपं सुरभित्वेति मतिरियं

नोत्क्षेपणं तिर्य्यक् चेति चलाचलस्वरूपभेदस्य तादूप्येणाप्रतीतौ प्रतीतिः इतरेतराभावस्य त्वनाश्रितः समानाधिकरणयोर्निषेधप्रत्ययः वैधर्म्म्यस्य तु विरोधः स चैकधर्म्म्यसमावेश इत्येषा दिक्। सममो प्यनुकूलएव घटादौ व्यापकता प्रतिक्षेपस्याप्यव्यापकतोपलम्भोपलम्भकत्वात् व्यापकत्वस्य निष्क्रियत्वव्याप्तत्वाच्च अन्यमनु क्वचिदिदृश एव यत एव हि क्वचिदविधेयोऽतएव क्वचिद्विधेयोऽव्यापक इति व्यवह्रियते। सर्वत्रेति चेन्न व्याप्त्यसिद्धे विरोधाच्च नहि यदव्यापकं तत् सर्वथा विधेयमिति प्रतिबन्धः क्वचिदस्तीत्यव्यापकार्थः सर्वत्र नास्तीति चा विधेयार्थस्त्वाभिमत स्तदनयोर्विरोधोऽपि स्यात् यद्विधेयस्वभावं तत् कथं प्रतिषेध्यमिति चेन्न प्रतिषेध्यस्वभावता हि विधेयस्य विरुद्धा नतु प्रतिषेधप्रतियोगितापि। अथ योऽस्ति कथं तस्य प्रतिषेधोऽप्यस्तीति चेत् कोदोषः अनयोरविरोधप्रसङ्ग इति चेत् प्रकारभेदेन प्रसङ्गोपि न दोषमावहति तदभेदेन तु विधिनिषेधौ केन स्वीकृतौ यं प्रत्यविरोधः प्रसज्येतेति। एतेन कालभेदादिनाप्यविरोधो द्रष्टव्यः। अस्तु तर्हि स्थूलघाती विरुद्धधर्म्माध्यासो ग्रहणाग्रहणादिः पञ्चविधः नासिद्धेः तथाहि यो येन यथैव यदैवोपलभ्यते स तेन तथैव तदैव नोपलभ्यतइति नानुभवः नाप्यभ्युपगमः एकावयवसहितस्योपलम्भोऽन्यावयव सहितस्यानुपलम्भइति चेत् एवं तर्ह्यवयविन्युपलभ्यमाने कश्चिदवयव उपलभ्यते कश्चिन्नेति वाक्यार्थः सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतइति न्यायात् तथाचावयवानामुपलम्भानुपलम्भाववयविनि सञ्चार्य्य प्रसङ्गसाधनमनेन। एतेनावृतानावृतत्वं व्याख्यातम्। अनावरणदशावत् कतिपयावयवावरणेऽपि तथाविधस्यैवोपलम्भः किन्न स्यादिति वक्ष्यते तदप्यसत् तस्य परिमाणगतसामान्यविशेषस्य ततोऽन्यस्य नियतसामग्रीविषयस्य तदभावे तदुपलम्भेऽप्यनुपलम्भत्वात्। एतेन कम्पाकम्पसंसर्गौ निरस्तः सामग्रीभेदेनावयवनियतकम्पोत्पादे तस्यां दशायामवयविनो निश्चलत्वात्। एवं तर्हि कम्पा-

कम्पयोरवयवयो र्विभागात् संयोगनाशे द्रव्यनाशः स्यादिति चेत् ततः किं व्यपसिद्धान्त इति चेन्न एवमपि क्वचिदभ्युपगमात् सर्वत्रैवं प्रसङ्ग इति चेत् तथाप्यवयविनः स्थिरत्वाश्रितम् । नन्वेवमपि कर्म्मणो द्रव्यारम्भकसंयोगप्रतिद्वन्द्वि विभागजनननियमानभ्युपगमात् कारणविशेषात् कस्यचिदेव कर्म्मणस्तथाभूतविशेषत्वं । एतेन पाणौ चलति तन्मूलभूतः परमाणुरपि चलेत् ततो अपराङ्गपरमाणोर्विभागः ततो यो येन संयुज्यते विभज्यते वा स तत्कार्य्यद्रव्येणापीतिन्यायेन भुजपाण्योरपि विभागः ततः संयोगनाशः ततः शरीरनाश इति निरस्तम् । नहि पाणिपरमाणुक्रिया भुजपरमाणुविभागमारभते नियमेन तदनारम्भकत्वे कर्म्मत्वव्याहतिरिति चेन्न आकाशादिदेशे एवमपि सर्वत्रैवोपलभ्येत विभागिभ्यामाकाशादिदेशाभ्यां न संयुज्येतेति चेन्न अवयवसंयोगविभागाभ्यामेव तत्सिद्धेः । एतच्च सम्यगवबोधदार्ढ्यार्थमधिकमनुसन्धेयं तर्हि चलदवयवी लभ्येतेति चेत् नेदमनिष्टं पाणौ कम्पमाने शरीरं न कम्पत इति प्रत्ययात् । अथवा यो यदाश्रिततयोपलभ्यते स तस्मिंश्चलत्यचलोपि चल एव विभाव्यते दर्पणमुखवत् जलचन्द्रवदिति द्रष्टव्यम् । कृतं प्रतीतिविकल्पकल्पनया चलत्यवयवे सर्वत्र तथैवेति न किञ्चिदनुपपन्नं न चले तु कथं तथोपलभ्यतां तथापि चलाचलाश्रयस्य चलाचलतया प्रतीतौ चलाचलजलचन्द्रवत् द्वैतप्रत्ययोपि स्यादिति चेत् स्यादपि यद्याश्रयविच्छेदः स्यात् नह्येकस्मिन्नेव जलेऽविच्छिन्नावयवभेदेन विचन्द्रभ्रमो नाम किन्तु स एवैकस्थले चल उपलभ्यतेऽचले त्वचल इति वीचिषु सोऽपि सहस्रनिभ इति चेत् एवमेतत् तासां विच्छेदेनावलोकनात् । अस्तु तर्हि चलाचलयोर्युतसिद्धिप्रसङ्ग इति चेत् न स्वयं प्रतिबन्धासिद्धेः न च प्रसङ्गे व्याप्तावपि पराभ्युपगमः शरणं नचैवं पराभ्युपगमोपि वस्त्रोदकादौ दृश्यते तावदयमिति चेन्न तन्तुवस्त्रादौ विपर्य्ययस्यापि दर्शनात् इदं मिथ्येति चेत् तत् कथं सत्यं अबाधादिति चेत् इह तर्हि बाधकान्तरं वाच्यं

चलाचलत्वमेवेति चेन्न स्वतः सिद्धावपि किमिति नेदं बाधकमिति विपर्य्ययस्यापि वक्तुं शक्यत्वादिति इतरेतरविरोध इति चेन्न भ्रान्त-त्वात् तन्मूलत्वाभिमतस्य संयोगासंयोगाविरोधोऽसिद्ध इति चेन्न परमार्थ-वादिनं प्रति प्रागेव परिहृतत्वात् । इतरं प्रति का वार्त्तेति चेत् सैव तावत् तथैवाविरोधात् प्रकारभेदेनापि विरोधाभ्युपगमे व्यासेद्र-सिद्धेः संयोगतदभावयोरेवासिद्धेः सिद्धौ वा प्रकारभेदस्य विरुद्ध-स्वाभावसाहित्यापरित्यागात् नचैवं पदार्थान्तरवैधर्म्येण संयोगस्य निराकरणीयः तद्वैधर्म्येण तेषामेव निराकरणप्रसङ्गात् । नचैवमेव न्याय्यं नियमवता हि सत्यवैधर्म्येणेतरन्निराक्रियते असत्यवैधर्म्येण सत्यत्वस्यैव निर्वाहात् निषेध्यप्रतीतिमात्रशरीरत्वाच्च निषेधसिद्धेः । शशविषाणादौ कल्पितेनापि निषेध्येन निषेधसिद्धिरिति चेन्न निरा-कृतत्वात् संयोगस्य बाधकाभावे कल्पितत्वसिद्धावतिप्रसङ्गाच्च शश-शृङ्गन्यायस्य च योग्यानुपलम्भाभावेनासिद्धेः अत एव बाधकात् तत्सिद्धावितरेतराश्रयत्वं शब्दप्रत्यभिज्ञानवत् संयोगप्रतीतेरन्यथोप-पत्तिमात्रेण बाधकप्रवृत्तिरिति चेन्न अनुभवस्य तदनुरूपमुपाधि-मुखपिधानमदत्वा भ्रान्तत्वेनाव्यवस्थितौ तद्विपरीतानुमानप्रवर्त्तने धूमावनुष्णत्वानुमाने प्रवृत्तिप्रसङ्गात् । नच प्रत्यभिज्ञानस्य सा-मान्यवत् संयोगप्रत्ययस्य तदनुरूपमुपाध्यन्तरमस्ति एवम्भूतमर्य्या-दातिक्रमे तु त्वदभिप्रेतप्रतिबन्धग्राहकस्यापि भ्रान्तत्वेनान्यथासिद्धि-प्रसङ्गः कथं वार्य्यं त्वदवारणे शिथिलमूलत्वात् कथं प्रवर्त्तेत यथालोकव्यवस्थानसाध्यसाध्यान्तरवत् संयोगस्यापि शब्दपाकजादयं क्रियाश्रिते तदव्यवस्थायामपि प्रामाण्यसिद्धेः न भ्रान्तत्वशङ्कावकाश इति । अस्तु तर्हि तद्देशत्वातद्देशत्वयोर्विरोधः न विरोधलक्षणा-भावात् नहि तद्देशसंसर्गविधौ नियमेन देशान्तरसंसर्गनिषेधः । तद्देशत्वतद्देशत्वयोस्तु स्यात् असंसर्गं तु केनेष्यते । अव्याप्यत्वमेवैक-संसर्गपरिच्छेदकं तदभावव्यवच्छेदकत्वेन तदन्यव्यवच्छेदफलमिमं विरोध

मुद्गिरतीति चेत् स्यादप्येवं यदि नियमेनैकसंसृष्टस्यान्यसंसर्गं प्रति क्षिपेदध्यक्षमुदियात् नत्वेतदस्ति युगपदेकस्यानेकसंसर्गप्रवृत्तमध्यक्ष-मविशेषात् सर्व्वसंसर्गं वा प्रतिक्षिपेत् न वा कमपि स्वात्मानमेव वा सर्व्वथा न विरोधं दीपयेत् अन्ततः परमाणोरप्येकस्यानेकैः पर-माणुभिः संसर्गस्वीकाराच्चेति । एतेन वृत्तिविकल्पो निरस्तः पर-माणुवदवयविवृत्तेस्तुल्ययोगक्षेमत्वात् ।

अस्तु तर्हि चित्रे नीलानीलविरोधः नहि तदेकं रूपं चित्रत्वविरोधात् नानेकं एकावयवि समवायविरोधात् नचानेकं व्यापकं तथानुपलम्भविरोधात् न व्यापकं तथानुपलम्भविरोधात् । नचाव्यापकं स्वाभावविदेशजातीयत्वविरोधात् । अन्यथा विरोधा-विरोधव्यवस्थाविरोधात् नचाव्याप्य एवावयवी आवृतत्वविरोधादिति चेन्न चित्रत्वं हि नानात्वं वा मिथोविरुद्ध नानाजातिसमवायं वा अभिप्रेत्यैकत्वाभ्युपगमे विरोध उद्भाव्यते तदैवमेतत् न तु तथाभ्युप-गमः । न खल्वनेकत्वं चित्रत्वं सुखेष्वप्यनेकेषु चित्रप्रत्ययप्रस-ङ्गात् । नाप्येकस्मिन् विरुद्धानेकजातिसमवायः विरोधेनैव निरा-कृतत्वात् अपि तु नीलत्वादिवच्चित्रत्वमपि जातिविशेषः स चाव-यववर्त्तिविजातीयरूपसमाहाराभिव्यङ्ग्यत्वान्नैकरूपावयवघटितस्याव-यविन उपलम्भेऽप्युपलभ्यते । अतएव परमाणौ चित्रेऽपि चित्रप्रत्ययो न कदापि तथाप्यचित्रे पार्श्वे चित्रप्रत्ययो माभूत् धवलप्रत्ययस्तु कुत इति चेत् अवयवरूपव्यवहारेणावयविनोऽपि तथा प्रत्ययात् । अतएव यत्रावयवरूपं न प्रत्यक्षं तत्र व्यवहाराभावे तदपि नास्ति दृश्यमेव बाह्यालोकरूपमारोप्य पिञ्जरमवयविरूपमालोक्यते । स्यादे-तत् यदि चित्रत्वं नाम जातिविशेषः कथं तर्हि विरुद्धजातीयरूप समाहारमात्रे चित्रप्रत्यय इति चेत् । नवै नीलधवलाद्यवयवेषु पटेषु क्वचिदपि कार्य्ये वाच्यं चित्रप्रत्ययः कदापि वैधर्म्यनिमित्तस्तु न बाध्यते चित्रमध्यस्थस्यादिपदवदनेकार्थत्वात् । नीलपीतादिषु

मिथःसंश्लेषेष्वनारब्धद्रव्येष्वपि कथं रप्रत्ययोभवतीति चेत् सत्यं द्रव्यान्तरोत्पादाभिमानात् सौक्ष्म्यातिशयप्रत्ययवदुपपत्तेरिति ।

अस्तु तर्हि परमाणुनिरासः सर्वविलोपः तथाहि बहुभिः परमाणुभिः संबध्यमानः परमाणुः प्रत्येकं किमेकदेशेन संयुज्यते कार्त्स्न्येन वा । प्रकारान्तराभावात् न प्रथमः तस्यैकदेशाभावात् भावे वा परमाणुत्वव्याघातात् । न द्वितीयः परमाण्वन्तरेणासंसर्गप्रसङ्गात् नह्यस्ति सम्भवः एकत्रैव परिसमाप्तवृत्तिरन्यत्रापि वर्त्तत इति न बुद्ध्या समानयोगक्षेमत्वात् । नह्यस्ति सम्भवो नील एव विषय आकारे वा परिसमाप्तात्मा पीतादिसंस्पृष्टात्मा चेति न द्वितीया तद-भावात् एवमनाकारत्वमविषयत्वञ्च बुद्धेरस्त्येवेति चेत् तत् किं यत् प्रतिभासते तदसत् आहो न प्रतिभासत एव किञ्चित् । नाद्यः असत्यपि नीलपीतादौ आगतवृत्तिविकल्पस्य तदवस्थत्वात् नहि स्वरूपमेव विज्ञानं नीलोल्लेखि पीताद्यनुल्लेखित्वप्रसङ्गात् । नापि तदेकदेशः तदभावादित्युक्तत्वात् न द्वितीयः बाह्येऽपि वृत्तिविकल्पस्यानुपपत्तेरिति ।

स्यादेतत् निःशेषसमुदायी ज्ञानशब्दस्यार्थः समुदाये कश्चिदेव समुदायैकदेशपदार्थः न च बुद्धिः समुदायस्वभावा तस्या एकरूप-त्वात् तत् कुतः कार्त्स्न्यैकदेशविकल्पोत्थानं कथं तर्हि तद्विषयिणी तदाकारवती वा प्रकारान्तराभावादिति । यदि तदा स्वरूपेणेति ब्रूम इति चेत् स्फुरन्निरठङ्क तार्किकवेदिकाविटङ्केन केवलमसभ्य-मभ्यसूयत दूरङ्गतेति । एतेन तदेकदेशत्वं निरस्तं तथाहि बुद्धेर्नीलाद्याकारतां परिच्छिन्दद्व्यक्तं तदभावव्यवच्छेदमुखेन तदविनाभूतां पीताद्याकारतामपि व्यवच्छिन्द्यात् तथा च कथमेका बुद्धिर्नीलपीता-द्याकारा स्यादिति तुल्योऽनुयोगः भवेदेवं यदि नीलाद्याकारतायाः पीताद्याकाराभावाविनाभावः स्यात् स एव तु कुतः नीलपीताद्या-कारायाः बुद्धेरैकात्म्येनैव निश्चयात् प्रत्याकारनियतत्वे चित्रविप्रति-पत्तेरिति चेत् तदेतत् तुल्यं परमाण्ववयव्यादिषु । नहि तत्राप्यनेक

परमाणुसंसृष्टस्य परमाणोरनेकावयवसंसृष्टस्यावयविनो वा ऐकात्मेन नानुभूयते तथात्वे वा एकसंसर्गप्रतिपत्तिः कदाचिन्न स्यादिति तुल्यैवानुगतिः । वाचिवैचित्र्यन्तु क्वोपयुज्यत इति । संयोगव्यवस्थापनेनैव षट्केन युगपद्योगात् दिग्देशभेदात् छायावृत्तिभ्यामित्यादयो निरस्ताः परमाणुसिद्धसिद्धिभ्यामेव मूर्त्तत्वादयो निरवकाशिताः आकाशव्यतिभेदादयस्तु सम्भाविता एव सर्वत्र च हेतुदशायां प्रतिज्ञापदयोर्व्याघातः कालात्ययापदेशश्च प्रसङ्गदशायामाश्रयासिद्धिर्व्याप्त्यसिद्धिः दृष्टान्तासिद्धिः अनवस्थाप्रसङ्गविपरीततर्कस्य तदुपष्टम्भकतया च त्रुटेरनेकत्वप्रसङ्गस्य च विद्यमानत्वात् । न च प्रलयः परमाणोरसत्त्वसाधकस्य प्रमाणस्याभावात् । सावयवत्वापादकानाञ्च हेतूनामनवस्थाव्यापकत्वात् तदन्यस्त्वयं परमाणुरस्त्यबीजो यस्य भेदाद्व्यणुकाणुकादरमपि भित्वा निष्पततीति । न च कल्पिताश्रयाः कल्पितप्रतिबन्धाश्च प्रसङ्गा भविष्यन्तीति युक्तम् इच्छाकल्पितेन व्यवहारेण सर्वविधिनिषेधव्यवहारविलोपप्रसङ्गात् लोकव्यवस्थापेक्षणे तु तद्विरोधेनोत्तरस्य निषेधकस्यात्मलाभाभावादित्यसकृदावेदितत्वात् अन्यथा सर्वमेतद् द्वावपि समानं सापि हि षट्केन युगपद्योगादिभिः सावयवा प्रसज्येत । तस्यामसिद्धा इति चेन्न अनुमानसिद्धत्वात् तथाहि बुद्धिः षट्कयोगिनी मूर्त्तिमती च सत्त्वात् व्यवहर्त्तव्यत्वाद्वा आरोप्यवदिति शक्यते विपर्ययस्य धर्मिग्राहकमानबाधितत्वादनवकाशमिदमिति चेत् एव मन्यत्रापि प्रतिसन्धेया इत्येषा दिक् ।

अन्यस्तु चक्षुषी निमील्य निर्द्वन्द्वीभवितुमिच्छन्नाह अस्तु तर्हि बुद्धेरपि विलोप इति । अत्र तु किं वक्तव्यं यत्र हेत्वादिव्यवहारो नास्ति । अस्तु परं साम्वृत इति चेत् भवेदेवं यदि संवृतिरपि परमार्थसती स्यात् अन्यथा तु न यथा वास्तवस्तथा साम्वृतोऽपि संवृतिरपि सतीति चेत् अस्या अप्यसत्त्वे किञ्चिदधिकमुक्तं पर-

संहतेषु परमाणुसत्त्वस्वीकारे सैव बुद्धिरपरपरिहर्येति। सती च बाधकवती च सम्भूतिः सतीति चेत् सत्येव यदि सत् कथं बाधकं तथा चेत् कथं तदा नीलस्य सत्त्वमिति दृश्यते तावदेवमिति चेत् सत्त्वै- कार्थसमवायिनोऽबाधकत्वमेव तर्हि हेयं बाधकैकार्थसमवायिनः सत्त्वमेव किन्न हीयते इति चेन्न बाधकस्यापि त्यागप्रसङ्गात्। उभय मप्यवर्ज्जनीयमेव तर्हि एवमेतत् मिथोविरोधस्तु हेयः नहि विरुद्ध- योरेकार्थसमवायः तथाभूतयोर्वा विरोधः शक्यउपपादयितुमिति स्वसमयात्। नच विचारावसरे स्वसमयावतार इति यथा यथा च बुद्धिनिवारणाय यत्न स्तथातथोज्ज्वलः प्रकाशः तन्निराकरणमपि बाहुल्यमेवेति तदेतदायातं प्रदीपान्तरेण प्रदीपं निर्व्वाप्य तिमिरा पादनमिति। एतेन हेतुफलभावानुपपत्तेः सर्व्वविलोपइति निरस्तं तन्निराकरणप्रयासस्य साफल्यवैफल्याभ्यां तन्निराकरणानुपपत्तेः सत् कार्य्यदूषणस्येष्टत्वात् असत्कार्य्यदूषणस्य च प्रत्यक्षबाधितत्वात् तत्प्रतिपादनस्यासतएवोत्पत्तावनैकान्तिकत्वात् सत्त्वे वा प्रयास- वैफल्यादिति।

स्यादेतत् माभूवन्नेतानि दूषणान्यवयविनि अनुपलम्भस्तु स्यात् नहि परमाणुसञ्चयादपरं किञ्चिदुपलभ्यत इति चेत् वैयात्यविज- म्भितोऽयं स्थूलैकानुभवस्य सर्व्वजनसिद्धत्वात् तत्प्रतिपादनस्य विकल्प मात्रं तदिति चेन्न स्पष्टप्रतिभासत्वात् औपाधिकमस्य स्पष्टत्व मिति चेत् तथाभूतानुभवमन्तरेणोपाधेरप्यभावात् अन्यथा नीलादि विकल्पानामपि तथैव स्पष्टत्वोपपत्तौ सर्व्वप्रत्यक्षोच्छेदप्रसङ्गात्। निगृहीतनिश्चितएवार्थे प्रत्यक्षस्यापि प्रामाण्यात् निश्चयोपप्लवे तस्या प्युपप्लवादिति। नच परमाणवएव स्थूलाः तत्त्वव्याघातात् नच तत्- समुदायस्तस्य समुदितस्यानस्य त्वयानभ्युपगमात् अभ्युपगमे वा अवयविना किमपराद्धं नच समुदिताएव तथा प्रतिभासितुमर्हन्ति तेषां प्रत्येकमस्थूलत्वात्। नच नानादिग्देशव्यापितैव स्थौल्यं पर-

माणुषु प्रत्येकमसम्भवात् न च नानात्वैकार्थसमवायिन्येव सा स्थौल्य
मिति साम्प्रतं स्थूल एक इति प्रत्ययविरोधात् न च भागेष्वारोपितेन
एकत्वेनेदमुपपत्तिमत् तदसम्भवात् नहि करचरणचिबुकनासिकादि
परमाणूनामैक्यं कश्चित् क्वचिदारोपयति न च तेष्वभेदेन प्रथमानेषु
स्थूलप्रत्ययः न च तत्त्वे स्फुरत्येव तद्विपरीतातत्त्वसमारोपसम्भवः।
अपि चैवमेकपरमाण्वात्मना परमाणुकोटिरप्यारोपिता परमाणुता
मात्रतयैव परिस्फुरेत्। न स्थूलतया न च नानादिग्देशव्यापित्व-
स्यैवमच्छिन्नेति साम्प्रतं विरोधात् यदि हि नानादिक्काः परमाणवो
देशतयावभासेरन् नैकतया देशितया वारोप्येरन् तथा च कस्य
नानादिग्देशव्यापिता देशिनोऽपरिस्फूर्त्तेः। अथ तथारोप्येरन् न
नानात्वेन देशत्वेनवावभासेरन् तथा च कस्य नानादिग्देशव्यापिता
देशानामपरिस्फूर्त्तेः तस्मादेकत्वारोपे परमाणुमात्रत्वावभास एव
स्यादिति एवन्तर्ह्यनारब्धद्रव्यराशिषु का वार्त्तेति चेत् नानादेश
व्यापित्वसाम्येन तावत् परिमाणद्रव्यव्यवस्थारोपः नचेत्तापि तथा स्यात्
अन्यथाप्यसिद्धेः न चासन्नेवैकः स्थूलः परिस्फुरति बाधकानाम-
पास्तत्वात्। एतेन प्रतिभासधर्म्मोऽपि निरस्तः सोऽपि ह्यसन् वोद्धो
वास्तवो वेति न तृतीयां गतिमतिवर्त्तते। अतीन्द्रियाश्च प्रत्येक
मणवः कथं मिलिता अपि दृश्येरन्। अतीन्द्रियसमूहस्याप्यती-
न्द्रियत्वात् विशिष्टोत्पादादैन्द्रियकत्वमिति चेत् किमद्यापि स्वप्ने हस्तं
प्रसारयसि।

अस्त्वेवं तथापि स्वभेदाज्जातिभेदो निराकृतो जातिसङ्कर
प्रसङ्गात् तदभेदेपि तत्त्वाद्वा न कश्चिद्विशेषः। भवतु वा जातिवि-
शेषोपि तथापि स्थूलत्वमेवैन्द्रियकत्वं प्रतिप्रयोजकं मन्तव्यम् अन्यथा
स्थूलतामनापन्नस्यैकोपि परमाणुः कदापि तथोत्पन्नः प्रत्यक्षतामि-
यात् नियमेन तु तद्विपरीतस्य प्रत्यक्षता तथाविधस्याप्रत्यक्षतायामेव
विश्राम्यति अन्वयव्यतिरेकगम्यत्वाद्धेतुस्वभावस्य। न च मिलिता

अपि स्थूलत्वयोरत्यन्ता नच महत्त्वमेव स्थौल्यं तद्विपर्य्ययस्तु सूक्ष्मता वेति तद्देशानामपि प्रत्यक्षत्वप्रसङ्गात्। नैरन्तर्य्यमपि विवक्षितमिति चेन्न तस्य प्रकृतेऽप्यसम्भवात् रूपपरमाणूनां रसादिपरमाणुभिरन्तरित- त्वात् न चारोप्यते नैरन्तर्य्यमितरेतराश्रयप्रसङ्गात् नैरन्तर्य्यारोपे तेषां स्थूलानां ग्रहणं तद्ग्रहणे च सति नैरन्तर्य्यारोप इति । तस्मा- दैन्द्रियकत्वे स्थूलतायाः प्रयोजकत्वात् अप्रयोजकत्वे तत्तद्देशानामपि प्रत्यक्षत्वप्रसङ्गात् । तेषाञ्च प्रत्येकमस्थूलत्वादतीन्द्रिया एव पर- माणवः तथाच सर्व्वाग्रहणमवयव्यसिद्धेरिति ।

अस्तु तर्हि अवयवमात्रस्थायी स्थूलोऽर्थ इति चेन्न भागभाविनोः युगपदुपलम्भबाधितत्वात् घटपटादिभङ्गे तन्तुकपालादीनामुत्पाद समानोपादानतया सप्रतिघत्वव्याघाताच्चेति । सोऽयमधिकरण सिद्धान्तन्यायेन स्थूलसिद्धौ अथाभङ्गभङ्गः । एतेन यत् सत् तन्निरवयवं यथा विज्ञानं सन्तश्च विवादास्पदीभूता घटादय इति नि- रस्तं विपर्य्यये बाधकाभावेन व्याप्त्यसिद्धेः । यत् सत्तत् सावयवं यथा घटः सच्च विज्ञानमिति चार्व्वाकपरिवर्त्तस्याप्येवमाभास समो वा समाधिः । ननु निरवयवमेव विज्ञानं स्वसंविदितरूपं घटस्य च सावयवतायामन्यापि विवाद एव तत् कथं परिवर्त्तः कथं वा समः समाधिरिति चेत् शुष्कविवादस्य विज्ञानेऽपि दुर्व्वारत्वात् नहि कश्चित् कण्ठोष्ठताल्वजठरादिपरिहीनं पिठरमनुभवति अस्तु वा सत्त्वात् सप्रतिघत्वसिद्धिर्बुद्धावप्रतिघत्वं वा घटादाविति ।

अपि च स्थूलसाधनमिदं प्रसङ्गो वा न प्रथमः घटादिश्चेत् न स्थूलेतराणां रूपादीनां परमाणूनां वा पक्षीकरणे सिद्धसाधनात् स्थूलमेकमभ्युपगम्य पक्षविधौ आश्रयापदेशात् अनभ्युपगमे त्वा- श्रयासिद्धेरिति । ननु प्रामाणिकेऽभ्युपगमे बाधः स्यात् सर्व्वथान- भ्युपगमे चाश्रयासिद्धिः स्यात् । नचैवमन्येति चेत् तदेतन्नभःस्थल कमलपरिमलसाधनस्यापि आश्रयतामापादयदाश्रयासिद्धिदोष-

मोघायेत्यलमनेन । पर्व्वतादिवल्लोकप्रतीतिसिद्धान् घटादीनुपादाय निरवयवत्वानुमानं स्यात् अन्यथा ब्रह्मविवर्त्तादिविप्रतिपत्तिहततया दहनानुमानमपि पर्व्वतादौ न स्यादिति चेन्नैवमविरोधात् । नहि ब्रह्मविवर्त्तादिसिद्धावप्याश्रयादयोऽन्यप्रकाराः सम्भवन्ति तथाहि सर्व्वेण ब्रह्मपर्व्वते ब्रह्मधूमेन ब्रह्मवह्निरेव साध्यते केवलं सांवृतेपि व्यवहारे सत्याप्तव्यवस्थास्तीति तस्यां निर्भरः कर्त्तव्यः । इह तु घटादिव्यपदेशेन स्थूल एव यदि पक्षीकृतः कथं निरवयवत्वेन साध्येन न विरोधः अथ परमाणुरेव कथं न सिद्धसाधनं विप्रतिपन्नं प्रति न तथेति चेत् नवै कश्चित् परमाणूनां निरवयवत्वं विप्रतिपद्यते लोकव्यामोहनिवर्त्तनाय साधनमिति चेत् तथापि यं लोकः स्थूलमेकमुपलब्धवान् तस्य पक्षत्वे विरोधएव ततोऽन्यस्य पक्षत्वे सिद्धसाधनमेव एकः स्थूलोऽयमिति मिथ्येति चेत् एतदेव तर्हि साध्यतां किमनेनाजागलस्तनकल्पेन सत्त्वेन । नच तथैवेदं शक्यमुपसंहर्त्तुं व्यधिकरणत्वात् तस्मायेन रूपेण यस्य पक्षत्वं विवक्षितं तेन सिषाधयिषितधर्म्माविरोधविवादाभ्यां तत्रानुमानप्रवृत्तिर्नातोऽन्यथेति । नापि द्वितीयः विपर्य्ययापर्य्यवसानात् नच विवादविषयोनिरवयवः तस्मान्न सन्निति विपर्य्ययः । नचैवं सावयवत्वं पक्षस्यानिच्छता प्रवर्त्तयितुं शक्यते नच तत् त्वयेष्यते नच तस्येष्टौ तेनासत्त्वं शक्यसाधनम् आश्रयासिद्धेर्विरोधादसाधारण्याद्वा नच विपर्य्ययेपि परेच्छा प्रवर्त्तत इति ।

कः पुनरत्रयौक्तिको न्यायः तत् किं प्रत्यक्षान्न्यायो गरीयान् यद्येवं बुद्धावेव कोऽसौ तस्मादसारमेतत् तथापि यन्निरस्तसमस्तविरुद्धधर्म्माध्यासं तदेकमेव व्यवहर्त्तव्यं यथा विज्ञानं तथाच विवादाध्यासितएकस्थूलानुभवगोचरइति स्वभावहेतुः तावन्मात्रानुबन्धित्वादेकताव्यवहारस्य नह्ययमेकव्यवहारोनिर्निमित्तो ऽनियमप्रसङ्गात् नाप्यनिमित्तः द्रवकठिनोष्णशीतादावपि तथाव्यवहारप्रस-

ङ्गात्। अस्तु तर्हि बाह्येषु सत्वेष्वविश्वसन्देहः तथात्वविभाग-
स्याशक्यत्वादिति चेन्न तावत् सर्व्वस्य यथार्थत्वादेव विभागोऽनुपपन्नः
उत्तरविरोधात् तथाहि विपरीतमवगतं मयेति लौकिकी प्रति-
पत्तिः अन्यथाख्यातिरिति च वैनयिकी यथार्था न वा उभयथाप्यु-
त्तरेण न सिद्धिः। शब्दसंलापसर्व्वयाथार्थ्यमात्रमेतन्न प्रतीतिरिति
चेन्न विवादानुपपत्तेः नहि व्यवहारमात्रे परीक्षकाणां विवादः नच
नायमस्तीति शब्दार्थे विवादइति चेत् एवं सत्यप्रतीतस्य निषेद्धुम-
शक्यत्वात् पराभिप्रायनिषेधार्थत्वाच्च विवादस्य अभ्युपगन्तृप्रतिषेद्धोः
प्रतिषेध्यप्रतीतिः कथन्नास्तीति नचान्यज्ञानादन्यत्र प्रवृत्तिसम्भवः
अतिप्रसङ्गात्। नच ज्ञानसान्निध्यं नियामकमतिप्रसङ्गात् नच तत्
सहितोभेदाग्रहः। अग्रहप्राधान्ये भेदाविवक्षायां निवृत्तेरपि
प्रसङ्गात् तद्धेतोरभेदाग्रहस्यापि विद्यमानत्वात् नासौ निवर्त्तकः
अपि तु भेदग्रहइति चेन्न रजतएव नेदं रजतमिति ज्ञात्वा न
निवर्त्तेत भेदग्रहस्य तत्कारणस्याभावात् भावे वा विपरीतख्याति-
रभिन्ने भेदप्रत्ययात् तस्मात् प्रवर्त्तकवन्निवर्त्तकोऽप्यग्रहएव तेषां
स्वीकर्त्तुमुचितः तथा च स दोषस्तदवस्थएव। अथ भेदः प्रधानम्
अक्रमग्रहः तदा सत्येव रजतज्ञानाज्जनते न प्रवर्त्तेत इदमंशरज-
तांशयोर्भेदाभावादित्यादि स्वयमूहनीयम्। प्रवृत्तिवत् प्रतिपत्ताव-
प्युभयाग्रहस्तुल्यइति चेन्न अग्रहस्याविवक्षितत्वात् सामग्रीविशेषा-
देव तत्सिद्धेः तत्वेऽपरिस्फुरतीति तु नियमः नच क्वचिदपि भेदा-
वुभावपि तत्त्वं यतस्तथा स्यादित्येषा दिक्। नापि सर्व्वस्यायथार्थ
त्वात् तदग्राहकस्य यथार्थत्वाभ्यामुत्तरविरोधात् तत् किञ्चित्
प्रमाणं किञ्चिदप्रमाणमिति विभागएव वस्तुगतिः। नचासौ प्रतीति
गतिमवधूय व्यवहारगोचरः कथन्तानुनिरूप्यते स्वतः परतोवेति
आद्ये स्वयं ग्राहकेणेति वा। तत्र न प्रथमः स्वसम्वेदनस्यासिद्धेः
प्रकाशत्वस्यासाधारणत्वात् शब्दसाम्येनानुमानप्रवृत्तेः। नचाध्यक्ष

न च प्रमाणं सन्दिग्धभेदत्वात् स्वप्रत्यक्षस्योपलम्भस्य चार्थदृष्टिः
प्रसिद्ध्यति परेण परवेदनेऽनवस्था स्यात्। अथ क्रिया सजातीय
क्रियाकर्मतामश्नुते छिदावदिति। तर्कपुरस्कारान्नैष दोष इति चेन्न
उपलम्भापरपर्यायाद् दृष्टेः सिद्धिर्निष्पत्तिर्वा स्यात् प्रतीतिर्वा आद्ये
अनागतोपलम्भवेदनप्रसङ्गः अनुपलब्धस्यानिष्पत्तेः न ह्यविद्यमाने-
नाविद्यमानस्योपलम्भ इति स्वसंवित्तावसंवित्तिरेव। द्वितीये तु
सिद्धसाधनं न ह्यनुपलब्धोपलब्ध उपलब्धीभवति न चैवं सत्यर्थोऽपि
नोपलभ्येत न ह्युपलम्भप्रतीतिरर्थवेदनम् अपितूपलम्भनिष्पत्तिः।
उपलम्भादृष्टौ उपलम्भनिष्पत्तिरेव व्यवहारः कुत इति चेत् माभूत्
न ह्यव्यवहारादेव निष्पन्नस्य वस्तुनो निवृत्तिः तथा च तन्निबन्धनो-
ऽर्थव्यवहारो दुर्वार इति। न चानवस्था अवश्यवेद्यत्वानभ्युपगमात्
निश्चयवत् अन्यथात्वनिश्चितनिश्चयस्य नार्थनिश्चयोऽपि सिद्ध्येत्
न चासावात्मन्यनिश्चय इति तदिदं वधूमावमापनदृष्टान्तमनुहरति।
छिदादिवदिति दृष्टान्तमात्रेण नावधानं ज्ञानं न ज्ञानान्तर
कर्म तज्जातीयक्रियात्वात् या यज्जातीया क्रिया नासौ तत्क्रियाकर्म
यथा छिदा छिदान्तरस्येति तु न्यायविप्लवः छिदावत् सर्वथा सजातीय
कर्मत्वे साध्ये बाधितविषयत्वात् पुरुषान्तरज्ञानस्य च ज्ञानान्तर-
वेद्यत्वात् स्वयमपि स्मृत्यादिगोचरत्वाच्च। स्वकर्मत्वे साध्ये दृष्टान्तस्य
साध्यविकलतया हेतोर्विरुद्धत्वादिति। नापि स्वग्राहकेण विवे-
चनानुपपत्तेः न हि प्रमाणग्रहणं यथार्थत्वैकनियतमप्रमाणेऽपि प्रमा-
णाभिमानात्। अन्यथा विपर्ययज्ञानादप्रवृत्तिप्रसङ्गाच्च ततो यदि
प्रामाण्यमापाततः स्फुरेदपि तथापि नियमहेतोरभावात् प्रमाण
मेवेदमिति निश्चयः कुतः स च गम्यते पारलौकिकव्यवहाराङ्गत्वाच्च
प्रश्नानिवर्त्तनेन तदप्यूहं निश्चितमेवेति चेत् तन्निवृत्तिरेव कुतः
प्रमाणान्तरादिति चेत् तदपि निश्चयफलमन्यथा वेति अन्यथात्वेन
प्रश्नोच्छेदो निश्चयसाध्यत्वात्तस्य निश्चयफलत्वे तु योऽन्वयते न चासौ

स्वतइति। स्फुरणमात्रं तावदस्तु स्वतइति चेत् किन्तेन नैतदप्यनु-
संहितोपाधेरुपस्थितप्रत्ययायोगात्। नच विषयोपधानमात्रं प्रामाण्यं
तदाभाससाधारणत्वात् अपि त्वनुभवस्य सतोभूतार्थानुसन्धानम्।
नचार्थानुसन्धानेपि तस्य भूतत्वमनुसन्धीयते आरोपितस्यापि तत्कविषे
यणानुसन्धानात्। अननुसंहितस्य आरोपसाधारणत्वात् कश्चिद्विशेषो
ऽप्यनुसन्धीयतइति चेन्न कापि प्राथमिकेन अन्यथानभ्यासदशायामन्त-
त्रापि संशयेन स्वाभ्यासदशोत्पन्ने तु अनुसन्धानं व्याप्तिग्रहजनित
संस्कारसमुद्भवस्मरणबलेन भवत् प्रमाणान्तरशरीरएव प्रविशतीति
परतएवावच्छिन्नं। तथाप्यनवस्थेति चेन्नतावदसौ दृष्टान्तद्वारिका
प्रागेव तन्निश्चयात् पक्षद्वारिका तु स्यादपि यदि प्रामाण्यमवश्य
निश्चेयमभ्युपेयते। अज्ञातप्रामाण्येन कथं परप्रामाण्यवेदनमिति
चेत् यथा विषयवेदनम्। अस्तु तर्हि धर्म्मिलिङ्गद्वारिका ताभ्या-
मननुगमात्। तन्निश्चयस्य च प्रामाण्यनिश्चयमन्तरेणानुपपत्तेः
न द्वैताभावात् यत्र लिङ्गज्ञाने धर्म्मिज्ञाने वा तथ्यातथ्यभावेन द्वैत
मुपलभ्यते तत्र तथ्यत्वानिश्चये लिङ्गमाभासशङ्काकान्ततया न
निश्चीयते यत्र तु तज्ज्ञानं तदेकनियतं तत्र तावतैव लिङ्गनिश्चय-
स्तदाभासशङ्कानुत्थानात्। एककोटिनियतोह्यनुभवोनिश्चयः ज्ञान
तद्धर्म्मग्राहिणि च ज्ञाने न द्वैतमिति व्यवस्थितिरेव तस्यापि प्रा-
माण्यनिश्चयः परतएवेति न्यायसम्प्रदायः।

अतएवेति विशेषणात्तादृशस्य स्वतस्त्वेति तात्पर्य्याचार्य्याः।
स्यान्मतम् एतदेव तु कथं निश्चेयं यदेवम्भूतमेककोटिनियतमेव
यावता तत्राप्यनवस्थितिरिति चेन्न व्याप्तिज्ञानस्य साक्षादात्मन्य-
प्रवृत्तावपि सर्वोपसंहारेण यदुपाधिमुपादाय प्रवृत्तिः तद्धर्म्मवत्वात्
तज्जातीयत्वस्योपाधिः तत्र तत्राप्यविशिष्टमनुव्यवसायत्वात्। नच
सामान्येन नियमनिश्चये तदाक्षिप्ते विशेषे द्वैतशङ्कावकाशः।
यथा वाचकः शब्दइति आत्मनोवाचकत्वं न साक्षाद्विषयते प्रवृत्ति

विरोधात्। तथापि सामान्येन यदुपाधिमधिकृत्य प्रवृत्तः शब्द-स्तद्वत्त्वात् शब्दशब्दो वाचको न वेति शङ्कया न परिभूयते नाप्यन-वस्थेत्येवमिष्यापीति तर्कास्त्वत्र भवन्ति धर्म्मिज्ञानं व्यभिचरेत्। निरालम्बनमसदालम्बनं वा भवेत् निर्विकल्पकं तत् यद्यनुव्यवसायो व्यभिचरेत् तदार्थधर्म्मबोधोपि न स्यात् स्वावेद्यस्यार्थग्राहकत्वाभावात् यदि तज्जातीयं व्यभिचरेत् व्यभिचारोपि क्वचिदपि न व्यवतिष्ठेत तदव्यवस्थितौ व्यभिचारोपि न स्यात् अन्यथाख्यातिसत्यत्वे तस्य तत्वस्थितौ चान्यथात्वं स्यात् तदवधिकत्वात्।

एतेन स्वप्नजागरावस्थयोरविशेष इति निरस्तम् असतख्याते-रात्मख्यातेश्च निराकृतत्वात् अन्यथाख्यातेस्तत्त्वख्यातिव्यवस्थामन्त-रेणानुपपत्तेरिति। सा च जागरेपि यदि न स्यात् तदा न भवे-देव तथापि कथमनयोरवस्थयोर्विभागः कर्त्तव्य इति चेन्न लोकसिद्ध-त्वात्। किमनयोर्लक्षणमिति चेत् कर्त्तृकर्म्मकरणदेशकालप्रबन्ध बाधः काकतालीयसम्वादवान् स्वप्नस्य प्रबन्धे काकतालीयः कस्यचि-देव विषयस्य बाधो जागरस्येति। एतेन बाध्यप्रबन्धोऽवस्थावि-शेषः स्वप्नः प्रबन्धबाधकादिबाध्यप्रबन्धोऽजागरितमित्यपि द्रष्टव्य-मित्येकांशे प्रमाणमात्रविप्लवो भवेत्। तथा च न्यायरूढिः प्रेक्षा-वान्न तत्त्वमधिगच्छेदिति भियेति।

---

अस्तु तर्हि गुणगुणिनोरभेदान्नैरात्म्यं धर्मिग्राहकप्रमाणपरि-शेषादिति चेत् उच्यते। अस्ति तावदिह दर्शनस्पर्शनाभ्यामेकार्थं प्रति सन्धानं तदिदमेकैकविषयं वा स्यात् समुदायविषयं वा तदतिरिक्त वस्तु विषयं वा वस्त्वनुरोध्याकारविषयं वा अलीकविषयं वा नाद्यः। नहि यदेव रूपं स एव स्पर्श इति। न च रूपं त्वगिन्द्रियग्राह्यम् अन्धस्यापि नीलादिप्रत्ययप्रसङ्गात्। नचैकमेव वस्तु करणभेदेनान्यथा प्रथत इति युक्तम् अनात्मकत्वप्रसङ्गात् भेदाभेदव्यवस्थानुपपत्तेश्च।

नापि द्वितीयः स हि एकदेशतया वा एककालतया वा एककार्य्यतया
वा एककारणतया वेति । न तावदुपादानरूपैकदेशसम्भवः तयोः प्रति
नियतोपादानत्वात् सम्भवे वा तदेव द्रव्यमिति पर्य्यवसितं विवादेन ।
नाप्यधिकरणीभूतभूतलाद्याधारतया तत्सम्भवः चक्षुषा ह्युपलभ्यमाने
भूतले रूपविशेषे घटोऽपि चक्षुषैवोपलभ्यमानो रूपविशेषस्तदाधार
इति प्रत्यते निश्चेतु तयोरन्यतरभावेनैकज्ञानसंसर्गित्वात् तदधि
करणाः स्पर्शादयोऽपीति तु कस्य प्रमाणस्य विषयः नहि स्पर्शादय
श्चाक्षुषे चेतसि चकासति । स्पर्शोऽयं आधारइत्यपि नास्ति तथापि
भूतलघटस्पर्शयोराधाराधेयभावप्रतीतेः । न च समुदाययोस्तत्
सम्भवः परस्पराश्रयत्वप्रसङ्गात् एकाधारतायां हि समुदायानु-
सन्धानं समुदायानुसन्धाने चैकाधारतानुसन्धानसम्भवइति अनवस्था
प्रसङ्गाच्च भूतलस्यापि समुदायत्वं किंकृतमित्यनुयोगानिवृत्तेः ।
अतएव नैककालतया प्रमाणाभावात् भावे वा रासभकरभयोरप्येक
कालतया समुदायत्वप्रसङ्गः भेदाग्रहस्य प्रकृतेऽप्यसम्भवात् । अतएव
नैककार्य्यतयापि उपादेयरूपस्यैककार्य्यस्याभावात् एकोदकाहरण-
लक्षणा अर्थक्रिया इत्यपि न युक्तं रूपाद्यतिरिक्तस्य उदकस्यानभ्युप-
गमात् एकैकस्यानेकाहार्य्यत्वे प्रमाणाभावात् समुदायस्य चासिद्धेः ।
अतएव नैककारणतयापीति निमित्तमन्तरेण तु समुदायव्यवहारेऽति
प्रसङ्गः । तृतीये न विवादः । नापि चतुर्थः स हि विज्ञानमन्य
माश्रित्य वा स्यात् विपक्षादिवञ्चितसम्बादादा । आद्ये तु रूपादिषु
कः पक्षपातः प्रातिस्वार्थक्रियास्थितेश्च न द्वितीयोऽपि । ते हि रूपादीना
मिति चेन्न तेषां किन्तु तस्यैवेति किन्न स्यात् बाधकादिति चेन्न
तावत् क्रमयौगपद्यविरोधः कारकाकारकविरोधो वा बाधकं निषिद्धत्वात्
क्षणिकपरमाणुरूपद्रव्यवादाक्रान्तेश्च । सम्बन्धाभावइति चेत् असम्बन्ध-
स्यावस्तु कथं तदत् प्रतीयतइति चेत् तेषान्तथोत्पादादिति परि-
हारोऽस्तु तवैव यथा शरीरचेतनावदिति । रूपादिभिरेव सम-

स्वार्थक्रियासिद्धेः किन्तदिति विकल्पव्यवस्थापनयेति चेन्न तावन्मात्रे-
णैव समस्तार्थक्रियासिद्धेः किं रूपादिकल्पनयेत्यस्यापि वाचाटवच-
सोऽवकाशप्रसङ्गात् प्रतीयमानत्वादिति चेत् तुल्यम् एतेनालीक
विषयतापि निरस्ता। अभेदसाधनं बाधकमिति चेत् किन्तत् सहो-
पलम्भनियमइति चेन्न समस्तोपलम्भनियमस्यासिद्धेः पीतशङ्खोप-
लम्भादौ श्वैत्यानुपलम्भेऽपि शङ्खोपलम्भात्। नासौ शङ्खः किन्तु शङ्ख
इव तैमिरिकत्वावभासादिति चेत् अतोगुणवद्विभ्रमः यत्तैमिरिकेणाः
करतलपरामर्शप्रतिनियतार्थक्रियोपायानसम्भवन्तीति व्यवस्थाप-
यति इह तु तत्सम्भवेऽपि शुक्लतामात्रानुपलम्भादिति। व्यापकत्वा-
दिति चेत् वस्तुनोर्व्यापित्वोपलम्भयोर्वा आद्ये न विप्रतिपत्तिः नच
व्यापकानुपलब्धिमात्रेण व्याप्यतदुपलब्धी निवर्त्तेते दहनानुपलब्धौ
धूमतदुपलब्ध्योरपि निवृत्तिप्रसङ्गात्। तथापि वा किन्न परिकल्पयसि
धूमइवासौ न धूमइति पावकवत्तानुपलब्धेरिति। तस्मान्न व्यापकानु-
पलब्ध्या व्याप्यनिवृत्तिः किन्तु व्यापकनिवृत्तेः सा चात्रासिद्धेति वाच्यं
तदेतत् तुल्यं प्रकृतेऽपि उपलब्धेस्तु व्याप्तिरिहैव भमा श्वैत्यानुपल-
म्भेऽपि शङ्खोपलम्भादित्युक्तम्। स्यादेतत् पीतएव शङ्खः उत्पन्नइति चेन्न
पुरुषान्तरेण श्वेतस्यैवोपलब्धेः। नाप्ययमेव सहोपलम्भनियमो
हेतुरनैकान्तात्। अभास्वरं रूपं भास्वरेण सह नियमेनोपलभ्यते
ततोऽभिन्नञ्चेति देशाविच्छेदइति चेन्न असिद्धेः देहदेहिभ्यामनैकान्ताच्च
न तयोरविच्छेदानुपलम्भेऽप्युपलम्भादिति चेत्तुल्यं रूपाद्यनुपलम्भेऽपि
तद्वत्तामुपलब्धेः। तथापि न विपर्य्ययः कदापीति चेत्तुल्यं नहि देहा-
नुपलम्भे देहोपलम्भवद्देहानुपलम्भेऽपि देहस्योपलम्भसम्भवः। तव
दर्शने प्रतिपत्तिनिष्पत्तिसामग्रीसाहित्यनियमेन सहोपलम्भो वा देशा
विच्छेदो वा स्यात् नियमेन विरुद्धधर्म्माध्यासोऽभेदश्चेति कोविरोधः।
धर्म्मविरोधएव कोऽन्य इति चेत् तदुपलम्भेऽप्यनुपलम्भः तदभिधानेऽ
प्यनभिधानं तन्निषेधेऽप्यनिषेधइत्यादि।

नीलमुत्पलञ्चलतीत्यादौ च व्यावृत्तिभेदनिराकरणे पूर्व्वएव न्यायोऽनुसन्धेयः अन्यथोपाधिभेदात्। अभेदे च धर्म्मधर्म्मिणोर्दूरादूरतया ग्रहणे पटुपटुनी स्तः। नच पुरुषभेदेन तथैवान्यस्योत्पादः एकस्य [illegible]भावात् नचान्यान्यएवासौ एकदेशतया तत्तेन प्रतिसन्धानात्। [illegible] आत्मा भिन्नदेशस्य तथाभूतस्य प्रत्यासीदताप्यनुपलम्भात्। नच निरालम्बएव तदुपलम्भोऽस्त्वादिदेशप्रतिनियमानुपपत्तेः। न चाधिपतिप्रत्ययबलात्तस्येति युक्तम् अनुभवानां तद्देशोल्लेखानुरोधात् उल्लेखे वा सएवालम्बनप्रत्ययः तावन्मात्रानुबन्धित्वादेवलम्बनव्यवहारस्य। नच देशोऽस्यालम्बनं नतु वृक्षादिरिति साम्प्रतम् अनुपलब्धविशेषतया देशदेशिनोरविशेषात्। नचदवीयांसोऽपि विशेषाः स्फुरन्त्येव नतु निश्चीयन्तइति युक्तम्। नहि योगविमलाम्नन्धीतदृष्टेरन्यस्य ताराश्चूडामणयः प्रतिभान्तीति शक्यं प्रतिपादयितुम्। अनिश्चयानुपपत्तेश्च अनुभूतोऽप्यात्मा न निश्चीयतइति हेतुर्वाच्यः। वासनानुकूल्य इति चेन्न निःशेषविशेषवन्तं धर्म्मिणमुपलभ्य विदूरवर्त्तिनस्तद्विशेषस्यापि अनुभवव्यापारानुसारिनिश्चयानुदयात्। तथापि चानुभवकल्पनायां सर्व्वः सर्व्वदा सर्व्वं जानाति नतु निश्चिनोतीति किन्न स्यात्। भ्रान्तिवशात्तद्विपरीतविशेषनिश्चयेऽनुभूतविशेषानिश्चय इति चेन्न अनुभववैपरीत्यनिश्चयस्य सर्व्वत्रानाश्वासप्रसङ्गात्। यत्र च विपरीतस्याप्यनिश्चयस्तत्र का वार्त्ता यथा पराचीनैर्भागैर्वर्त्तमानानां संयोगविभागयोरिति।

अस्तु तर्हि नैरात्म्यम् अनुपलब्धेरिति चेन्न "सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः" इत्युक्तविशेषणासिद्धमिति चेन्न तदसिद्धेः। परोपगमसिद्धेरदोषइति चेन्न स्वतन्त्रसाधनत्वात्। यदि परः स्व सैव नैवमभ्युपगच्छेत् नूनं साधनमिदं मूर्च्छेत् यदि च परादृष्टिमवधूय इष्टान्तमभ्युपगच्छेत् एवमपि सम्भवेत् नचैवं शक्यं तस्य तदुपहितकल्पत्वादिति संक्षेपः। विस्तरस्त्वनन्तोऽभिधाइतिवदूषणीयः।

अथात्मसद्भावे किम्प्रमाणं प्रत्यक्षमेव तावत् अहमिति विकल्पस्य प्रायक्षणमात्रसिद्धत्वात्। न चायमवस्तुकः सन्दिग्धवस्तुको वा अबाध्यत्वादप्रतिक्षेपाच्च न च लैङ्गिकः अननुसंहितलिङ्गस्यापि स्वप्रत्ययात्। न च स्मृतिरिव मननुभूते तदनुपपत्तेः। अनादिवासनावशादनादिरयमवस्तुकोविकल्पश्चस्त्वपि न युक्तं नीलादिविकल्पसाधारण्यात्। इह वासनामुपादायानाश्वासे प्रमाणान्तरेऽपि कः समाश्वासो यतो नीलादिविकल्पेषु समाश्वासः स्यात्। तस्माद्वासनामात्रवादं विहायान्यत्किमपि किञ्चित् कारणं वाच्यं तच्चाप्तागमतदाभासौ वा लिङ्गतदाभासौ वा प्रत्यक्षतदाभासौ वेति। तत्र यथा प्रथममध्यमप्रकाराभावान्नीलविकल्पस्य चरमं कल्पमालम्बते तथाहमिति विकल्पोऽपि तथायं प्रत्यक्षपृष्ठभावित्वे साक्षादेव सवस्तुकः, तदाभासे तु मूलेऽस्य पारम्पर्य्यात् सवस्तुतेति। न च बाह्यप्रत्यक्षनिवृत्तावेव निर्मूलत्वं बुद्धिविकल्पस्यापि तथात्वप्रसङ्गात् तत्र स्वसम्वेदनं मूलमिहापि मानसप्रत्यक्षमिति न कश्चिद्विशेषः। शरीरादिवस्तुको भविष्यतीति चेन्न निरुपाधिशरीरेन्द्रियबुद्धितत्समुदायालम्बनत्वेऽतिप्रसङ्गात्। स्वसम्बन्धिशरीरादावयं स्यादिति वाच्यं तत्र कः स्वीयइति वचनीयम्। अनन्यत्वं स्वत्वं सर्वभावानां तथा च यदा तेनैव तदनुभूयते तदा प्रत्येतुः प्रत्येतव्यादव्यतिरेकादहमिति स्यात्। अतएव घटादयो न कदाचिदनन्यानुभवितृका इति न कदाप्यहमास्पदमिति चेत् एवन्तर्हि त्वन्मतेऽप्यहं प्रत्ययः शरीरादावारोपरूप एव ततः प्रत्येतुरन्यत्वात् बुद्धौ मुख्य एवेति चेन्न तस्याः क्रियात्वेनानुभूयमानाया भिन्नस्य कर्त्तुरहं छिनद्मीतिवदहं जानामीत्यनुभवात् नीलादिप्रत्ये-तव्याकारवत् प्रतिपत्त्राकारोऽपि। प्रतिपत्तैवायमात्मा तथा भासत इति चेत् तर्हि प्रत्येतव्यप्रतिपत्त्राकारयोस्तुल्ययोगक्षेमत्वात् सिद्धं नः समीहितम्। अस्तु स्वोपादानमात्रमिति चेन्न तत्प्रतिभासने तदाकारस्यापि प्रतिभासप्रसङ्गात् आकारमन्तरेणाकारिणोऽनव-

भासात् प्रवृत्तिसन्तानान्यो बुद्धिसन्तानः प्रतिपन्ना वयं तमालयवि-ज्ञानमाचक्ष्महइति चेत् । अस्तु तर्हि प्रवृत्तिविज्ञानोपादानमनादि निधनः प्रतिपत्ता स किं सन्तन्यमानज्ञानरूपः तद्विपरीतो वा इति चिन्तावशिष्यते निःशेषिता चासौ प्रागिति ।

---

कः पुनरत्र न्यायः प्रतिसन्धाने तथ्यमिदमित्यसिद्धमतथ्यञ्च विरुद्धम् अवशिष्टमनैकान्तिकमिति चेन्न तत्त्वार्थानवबोधात् नहि प्रत्यभिज्ञानमात्रमत्र विवक्षितं तत् किं कार्यकारणयोरेकसन्तान प्रतिनियमः । सोऽपि विरुद्धइति चेत् एषोऽपि न विवक्षितो नः । कस्तर्हि पूर्वापरधियामेककर्तृकतया विनिश्चयः । एषोऽपि तासा-मुपादानोपादेयभावेनाप्युपपद्यतइति चेन्न स्थैर्यसिद्धौ तदभावात् क्षणिकत्वेऽप्येकजातीयत्वे सति तदुत्पत्तिरेवोपादानोपादेयभावः शिष्याचार्यधियामपि तथाभावप्रसङ्गात् । भेदाग्रहे सतीति चेन्न प्रकृतेऽपि तदभावात् । शरीरभेदाग्रहस्तावदस्तीति चेन्न भिन्नजन्मज्ञानाव्याप्तेः अनुपलब्धपितृकेणापि बालेनातिप्रसङ्गात् । घटपाकक्षणयोरतथाभावप्रसङ्गाच्च । एकाधारतया नियमइति चेन्न तस्य वास्तवस्य क्षणिकत्वपक्षेऽपि विषमसमयानां क्षणानामभावात् काल्प-निकस्य त्वतिप्रसञ्जकत्वात् शरीरबुद्ध्योरपि समानदेशताभिमानात् । एतेनाभ्रान्तसमतैकावसायः प्रकृतिविक्रिये सतो हेतुफलस्योपादा-नोपादेयलक्षणमिति निरस्तम् ।

काष्ठस्य तु प्रकृतेर्विकृतिरङ्गारइति कुतो निश्चितं भवता यावता वह्नेरेवायं विकारः किं न स्यात् । वह्निसम्बन्धिकाष्ठादेव तदुत्पत्ते-रिति चेन्न काष्ठसम्बन्धेन वह्नेरेव तदुत्पत्तिरित्यपि किं न कल्प्येत । पार्थिवं पार्थिवोपादानमिति निश्चयादिति चेत् कुतएतत् सभागेष्व-लक्षणेष्वतथा दर्शनादिति चेत् एतदपि कुतः अभ्रान्तसमतैकाव-सायादिति चेत् । अथ केयं समता नाम यदि साजात्यं सादृश्यं

वा तत् प्राङ्गिरत्नम् एकसन्तानत्वञ्चेत्तदपि तदुत्पत्तिमात्रञ्चेत् नि-
मित्तनैमित्तिकयोरपि तथाभावप्रसङ्गः । उपादानोपादेयभावश्चेत्
कथं तेनैव तद्व्यवस्थाप्येत तज्ज्ञानेन तज्जनिकज्ञानमेवोपादानोपादेय
लक्षणमिति चेन्न आत्माश्रयप्रसङ्गात् । अन्योन्यतेति चेत् सैव
केति चिन्त्यं शक्तिविशेष इति चेन्न स तावत् प्रतिसन्ताननियतः । यथा
हि तेन तत्कर्त्तव्यं तथा तादृशमपि तत् कर्त्तव्यमित्यपि नियमएव
अन्यथा तेन तत् कृतमित्यपि न निश्चीयेत शक्तस्य दुरुन्नेयत्वात् ।
तथा च निरीहं जगज्जायेत कारणविशेष कार्य्यस्य तादृशत्वमापद्येत
तथा च न नियमउपपद्यते नापि प्रतिसन्ताननियतो विशेषाभावात्
अस्तु वैजात्यमिति चेन्न अनुपलब्धिबाधितत्वात् नहि शिष्याचार्य्य
नीलधियोर्मनागपि जातिकृतं विशेषमुपलभामहे । अदृश्यत्वादय-
मदोषइति चेन्न दृश्यसमवायिन्याजातेरदृश्यत्वानुपपत्तेः उपपत्तौ वा
धूमादावपि अवकाशप्रसङ्गात् । तथाचावान्तरधूमएव वह्नेः कार्य्यः
स्यात् इति शङ्काकलङ्कप्रसङ्गात् । नच धूमसामान्यमभिव्यञ्जयेत् एव-
मेतदाद्यस्यैव तथाभावादिति चेन्न तथापि शङ्कायास्तदवस्थत्वात् ।
तस्मात् कारणस्य वैजात्ये प्रमाणसिद्धे कार्य्यस्य सौसादृश्येप्यवान्तर
जातिभेदः कल्प्यते हेतुवैजात्यस्य फलवैजात्यं प्रति प्रयोजकत्वात्
अप्रयोजकत्वे तस्याकस्मिकत्वप्रसङ्गात् । कारणसाजात्येपि कार्य्यस्य
वैजात्यं सहकारिवैजात्ये पर्य्यवस्यतीति युक्तमुत्पश्यामः । अन्यथा
प्रकृते परलोकोपि न सिद्ध्येत् अचेतनोपादानकमपि ज्ञानमवान्तर-
जातीयं स्यात् । अचेतनमप्यवान्तरजातीयमुपादानं स्यात् दृश्यजात्य-
भेदेपि किञ्चिदेव निमित्तं भविष्यतीति शङ्कायाः समुत्थापयितुं
मशक्यत्वादिति ।

अस्तु तर्हि सहकारिभेदान्नियमइति चेत् सएवैकः कर्त्तेति
गीयते यद्येकएव कर्त्ता नतु तादृक् सहकारिपरम्परेति कुतोवि-
शेषादिति चेन्न तत्कर्तृकत्वं भिन्नकर्तृकेभ्यो व्यावर्त्तते नतु तादृक्

सहकारित्वमित्यतोविशेषात् । कुतश्चिदेवमपि स्यादिति चेन्ननु तएव विशेषश्चिन्त्यते तच तत्स्वभावत्वं वा तज्जातीयत्वं वा तत्सहकारित्वं वा तादृक्सहकारित्वं चेत्यनेकधा विकल्प्यते । तत्र प्रथमोऽसम्भवी द्वितीयोऽतिप्रसक्तः । चतुर्थे विज्ञानत्वाभावः तृतीयएव परिशिष्यते गत्यन्तराभावादिति । अन्यथा सत्यप्यस्मिन् नायमुपाधिः तच ताव-न्मात्रस्यानिबन्धनत्वात् । तथाहि सर्व्वतः तत्तत्कार्य्यानेकघटितघटतया प्रतिसन्धत्ते न वा आद्ये तत्प्रतिसन्धानादेव प्रतिसन्धातुरेकत्वं सिद्धं ज्ञानाद्भेदस्य धियामस्थैर्य्यस्य सर्व्वैरेव प्रतीतेः प्रतिसन्धातुः क्षणिकतायाः सर्व्वज्ञेनाप्यनाकलनात् । अथ न प्रतिसन्धत्ते न तर्हि कार्य्यकारणभावमात्रनिबन्धनं प्रतिसन्धानम् । नन्वस्ति सम्भवो यदन्वयेपि यस्यानन्वय स तावन्मात्रनिबन्धनमिति प्रतिसन्धत्ते न सत्यं तत्प्रतिसन्धानमतोन तावन्मात्रानेककर्तृसिद्धिरिति चेत् तत् किं सर्व्वत्रस्यापि विपर्य्ययः । आचार्य्येण दोषावहइति चेत् निबन्धनाभेदेपि कथमयम् आचार्य्योऽन्यस्तु ग्रहणवानीति वाच्यं भेददर्शनादर्शनाभ्यामिति चेन्न प्रवृत्तिविज्ञानानां भेदस्याखर्व्वत्वेपि दर्शनात् । विषया एव भिन्नाः प्रतिभान्ति न बुद्धयइति चेन्न आसामपि भेदनियमात् विषयभेदाग्रहणेपि आत्माभ्यासदर्शनात् । यदि च भेदग्रहेपि बुद्धिमात्रेण तदग्रहोऽभेदारोप उपयुज्यते । पार्थिवतया दृष्टात् काष्ठकाष्ठादङ्गार ज्वलोभस्माद्यभेदेन प्रतिसन्धीयेत नचैवम् ।

स्यादेतदालयभेदाग्रहात् प्रतिसन्धानमिति चेन्न सन्तानमात्रपरं प्रवृत्तिसन्तानादन्यदेव वा स्यात्तदन्तःपातिकादाचित्कानेकार्थं प्रत्ययरूपोवा । न तावदाद्यः नक्तमहर्निशयामिव सततं सन्तानद्वयमनुभूयते सत्यपि वा परस्परमनुपादानोपादेयत्वभावात् परस्परप्रत्याकलितार्थानुसन्धानमन्यः सन्ताने वा चैत्रमैत्रादिष्वपि प्रसङ्गः उभयोर्व्वाभयोपादानत्वे एकमप्यनेकाश्रयमिति किमपराद्धमवयविसंयोगादिभिः । न चालयविज्ञानोपात्तं प्रवृत्तिविज्ञानं न विषि-

मेवार्थप्रत्ययाच । न च मनस्तथा तस्य करणत्वेनैवानुमानादिति प्रति-
बन्धसिद्धिः यद्देवात्मसिद्धिश्च अनादिश्चासौ वीतरागजन्मादर्शनात्
अनन्तश्च सतोऽनादित्वात् मनश्च अन्यथाविकारकत्वात् विभुश्च नित्य
द्रव्यत्वे सत्यमूर्त्तत्वात् अमूर्त्तश्च निष्क्रियत्वात् निष्क्रियश्च नित्य
द्रव्यत्वे सत्यशब्दादिमत्त्वात् प्रत्यक्षधर्म्माश्रयत्वाच । तर्काश्चात्र
भवन्ति आदिमत्त्वे प्रथमप्रवृत्त्यनुपपत्तौ सर्वदैवाप्रवृत्तिप्रसङ्गः ।
सान्तत्वेऽनादेः सत्त्वानुपपत्तिप्रसङ्गः । अनन्यत्वे निर्गुणत्वप्रसङ्गः
अविभुत्वे दूरगमनादेः क्रियानुपपत्तिप्रसङ्गः । न च संयुक्तसंयो-
गात् तदुत्पत्तिः साक्षात् क्रियाकारकस्य तस्याभावात् अतथाभूतस्य
तद्धेतुत्वेऽतिप्रसङ्गात् । मूर्त्तत्वे नित्यस्याशब्दादिप्रत्यक्षधर्म्माना-
धारत्वप्रसङ्गः विशेषगुणवत्त्वारम्भकत्वप्रसङ्गः सक्रियत्वे मूर्त्तत्व
प्रसङ्ग इति प्राक्तार्थसंग्रहः । अणुरेवासौ विभागासमवायिकारण
संयोगाधारत्वात् मनोवत् अणीयांसमणोरपीति वाक्यविरोधाच्चेति
कश्चित् तदयुक्तम् आत्मन्यविभौ मनसोऽणुत्वासिद्धेः तत्संयोगक्रमादेव
क्रियाक्रमोपपत्तेः आगमस्तु महतोऽपि महीयांसमिति प्रथमपद-
मपहाय उपन्यस्तवदचमनेन ।

स्यादेतत् निर्व्वाणमोहाय हेयएव आत्मदर्शी हि तदुपका-
रिणि रज्यते तदपकारिणश्च द्वेष्टि रागद्वेषौ मूलं संसारस्य यस्तु न
तं पश्येत् नासौ तदुपकाराऽपकारिणमपि तेजो न रज्येत न द्विष्यात्
न संसरेदिति आकृष्टिर्वेन नैरात्म्यमुमुक्षुणापि नैरात्म्यमेव भाव-
नीयमिति चेत्र अनात्मदर्शिनो मुमुक्षुत्वव्याघातात् । नह्यात्मानमप्रति
सन्धाय कश्चन दुःखं हातुमिच्छेत् सुखं वाप्तुम् । मया स्वर्गापवर्गफल-
भागिना भवितव्यमित्यभिप्रायस्य यावदभियोगमनुवृत्तेः अननु-
वृत्तावभियोगनिवृत्तौ प्रत्यासिद्धेः । इयत्त नैरात्म्यदर्शी शिष्यं
द्रढ्येत् न च प्रव्रजितव्रतस्थासंवृतमनुष्ठानं प्रकुर्वीत । कथंचैवं
कुतो यावज्जीवेत् सुखं जीवेदित्यादयो निःप्रत्यूहप्रलापाः । यत्तु क्षमुप-

मिथ्यात्वश्रुतीनां आत्मनश्चैतस्य ज्ञानमपवर्गसाधनमिति चैव
श्रुतीनां दुःखोऽयमिति धीमःपुन्यश्रुतीनां बहिःसङ्कल्पत्यागो निर्मम-
कत्वश्रुतीनां आत्मैवोपादेय इत्यात्मश्रुतीनाम् गावड़वदनुष्ठाने ता-
त्पर्य्यं प्रकृत्यादिश्रुतीनां तन्मूलानाञ्च सांख्यादिदर्शनानाञ्चेति नेयम्।
अन्यथा "जैमिनिर्यदि वेदज्ञः कपिलोनेति का प्रमा। उभौ च यदि
वेदज्ञौ व्याख्याभेदस्तु किं कृतः"। प्रमाणत्वन्तु तस्य कुतइति चेन्न आप्तो
क्तत्वात् तदसिद्धमिति चेन्न विश्वस्य कर्त्तुरनुमानसिद्धत्वात्। विवादा
ध्यासितकर्त्तृकं सकर्तृकं कार्य्यत्वात् इति विशेषविरुद्धोऽयं हेतुरिति
चेन्न विरोधिविशेषाप्रतीतौ विरोधस्य प्रत्येतुमशक्यत्वात् तत्प्रतीतौ
वा सर्वोपलम्भनियमेन विरोधस्य बाधितत्वात् सर्वथैवाप्रतीतस्यापि
न्य.यगोचरत्वमपि कथमिति चेन्न आगमानुमानसिद्धत्वात्। ततोऽपि
कथं सिध्यतीति चेत् अप्रतीतप्रत्यायनं प्रमाणं नतु प्रतीतेन विरोधः
प्रत्यभिज्ञायहत्यतोविशेषात्। का पुनरस्यानुमानस्यैवंभूतप्रत्यायने
शक्तिरिति चेत् आकाङ्क्षानुपपत्तिनियमभेदेन त्रिविधः सम्बन्धः
तत्राकाङ्क्षानियमाभ्यामन्वयी अनुपपत्तिनियमाभ्यां व्यतिरेकीति
विभागः। अस्तु तर्हि तत्रविपक्षत्वं शरीराजन्यत्वादिति चेन्न अस-
मर्थविशेषणत्वेनासिद्धभेदस्यानुपपन्नत्वात्। अतिविपरिहारेण
विशेषणं समर्थमिति चेन्न एवमपिहि परिहरणोविरोधापत्तेः
अन्यथा विवादाध्यासितं नाङ्कुरहेतुकं शरीराजन्यत्वादित्यनेनापि
अन्यतरस्य सत्प्रतिपक्षप्रसङ्गात्। तर्हि तत्रोपहितबुद्धिरस्तु शरीरेति
त्पत्तौ बुद्धिनिवृत्तेः। बुद्धिनित्यत्वे शरीरानुपयोगात् प्रयत्ननित्य-
तायां ज्ञानेच्छानुपयोगादिति चेन्न प्रयत्नस्य विषयनैयत्यात् तद्धि
ज्ञानकार्य्यौ ज्ञानैकविषयतया कर्त्तव्यं तच कार्य्यमनित्यत्वे। कारणतया
ज्ञानं नापेक्षित विषयार्थन्तु तदपेक्षा केन वार्य्यते। नच तस्य तद-
पेक्ष विषयप्रवणत्वं ज्ञानत्वप्रसङ्गात्। अयमेव हि ज्ञानात् प्रयत्नस्य
भेदो यदयमर्थाप्रवणइति। नच निर्विषयएवास्त्विति वाच्यम् कृत्यस्य

त्वप्रसङ्गात्। तथा च कोऽपेक्षः कथं सिध्येत् मासैत्सीदिति चेन्न
तत्र साधनस्य निर्दोषत्वात् दोषे वा तस्यैव बाधः। सर्व्वविषयत्वा-
त्तस्य किंचिद्विषयनियमार्थेन ज्ञानेनेति चेत् तस्य स्वरूपेणार्थप्रवणत्वा-
भावात् भावे वा ज्ञानत्वप्रसङ्गादित्युक्तम्। जीवनपूर्व्वप्रयत्नवद्विषय
व्यवस्था भविष्यतीति चेन्न तस्य जात्यन्तरत्वात् सजातीयत्वे तस्या-
पीच्छापूर्व्वकत्वप्रसङ्गात्। इच्छाया वा तज्जातीयत्वं न स्यात् ताम-
न्तरेणापि तज्जातीयस्योत्पत्तेः। तस्मात् अतिजातीयस्य ज्ञानेच्छाभ्या-
मेव विषयव्यवस्था स च साधयितुमिष्टइति। तार्किकगर्व्वादूषणमाह
ननु सपक्षविपक्षयोर्दर्शनादर्शनमात्रस्य शतशः प्रवृत्तावपि व्यभिचा-
रोपलम्भात् तत्र तत्रानुपलब्धव्यभिचारस्यापि तथाभावसम्भावना-
क्रान्तत्वात् कारणान्तरं प्रतिबन्धस्य वक्तुमुचितम्। तत्र उपाधिविरहो
वा स्यात् तदुत्पत्तिर्वा विपक्षबाधकं वेति संक्षेपः। तत्र न प्रथमः
अदृश्योपाध्यभावनिश्चये अभ्युपायाभावात् दृश्येनैवोपाधिना भवितव्य
मिति नियमानुपपत्तेः। नापि द्वितीयः सा ह्यन्वयव्यतिरेकाभ्यां निश्ची
येत। तौ च दृश्यशरीरचेतननिष्ठौ वा स्याताम् उपाधिविधुरदृश्या
दृश्यसाधारणचेतननिष्ठौ वा। न प्रथमः विटपादौ व्यभिचारात्
प्रकृतासिद्धेश्च। न द्वितीयः घटादिकार्य्यव्यतिरेकसमये तत्प्रयोजक
कुलालादि व्यतिरेकवददृश्य चेतन मात्रव्यतिरेकस्य निश्चेतुमशक्य
त्वात्। नहि कुलालादिदृश्यव्यतिरेके तन्मात्रस्य व्यतिरेको विट-
पादावपि तथाभावप्रसङ्गात्। तर्हि सन्तानान्तरानुमानमपि कथं
कुम्भकारव्यतिरेके दृश्यादृश्यसाधारणचित्तमात्रव्यतिरेकासिद्धिवत् स्व
चित्तव्यतिरेकेऽपि सर्व्वप्रतिचित्तमात्रव्यतिरेकासिद्धेरिति चेन्न वादा-
न्तरत्वात् यदापि तत्रभावः तदापि परेषु अपरसाक्षात्कारार्थ
चित्तमात्रविनिर्भासदर्शितदृश्यदेहमात्रस्यैव प्रत्यक्षानुपलम्भाभ्यां कर्म्म
प्रतिकारकत्वप्रतीतेः परचित्तस्यापि कारकत्वं प्रतीयतइति। नापि
तृतीयः विपक्षे बाधकाभावात् देशकालनियमादीनां स्वकारणायत्त

सन्निधिना कादाचित्कत्व प्रतिनियतशक्तिना चरमेणाचेतनेनाप्युप-
पत्तेरिति उक्तानेकविकल्पेऽप्यनवस्थाप्युपपत्तेः। तथाहि चेत-
रो हि जगति भावाभाववत् विरोधी चेतनत्वेन चान्यथासिद्धिरन्तर्वर्ति-
त्वेति न तु पञ्चमः प्रकारः शङ्कितुमपि शक्यः विरोधाविरोधयोः
साहित्यासाहित्यकेवलविरुद्धानाधिकरणयोः परस्परनिषेधरूपत्वात्।
तत्र प्रथमश्च सोपाधित्वेन शङ्कनीयम् अकार्य्यस्यैवाकार्य्यस्यापि वा स-
कर्तृकत्वप्रसङ्गात्। न चेदमिष्टम् अकार्य्यस्य कारकत्वासामान्येन सहज
विरोधे कारकविशेषस्य कर्तुरनवकाशात्। नापि द्वितीयः तुल्ययोग
क्षेमयोरविशेषात् व्यभिचारशङ्कानिवारकत्वाच्च। चतुर्थस्तु स्यात्
सोऽपि न शरीरान्तर्भूतवृत्तिः चेष्टमानशरीरहेतुकस्यापि कस्य-
चिदचेतनपूर्व्वकत्वप्रसङ्गात्। न चेदमिष्टं चेष्टाचेतनयोरविनाभाव
भङ्गप्रसङ्गात्। नापि सहवृत्तिः देहस्यानुपाधित्वे तस्यानुपाधि-
त्वात् तयोस्तुल्ययोगक्षेमत्वात् अन्यथाभावे सहवृत्तिनियमानुपपत्तेः।
शरीरस्य च नोपाधित्वं कर्त्तव्यापकत्वात् तत्कार्य्यत्वस्योपाधेर्विद्य-
मानत्वात्। नाप्यायतनतया तथाभावो भोगोपाधित्वात्। नाप्युप-
करणप्रापकतया साक्षात् प्रयत्नानधिष्ठेयतया व्याधित्वात् अन्यथापि
तत्प्राप्तेरिति। नाप्यधिकवृत्तिः शरीरविनाशेऽस्य कर्तुः क्षयमन-
भ्युपगमात्।

अस्तु पाक्षिकोऽभ्युपगमः तेन न कार्य्यत्वमात्रात् कर्तृमत्त्वसिद्धिः
शङ्कितोपाधित्वात्। न चोपाधेरेव तत्सिद्धिः तस्य स्वयं सन्दिग्धासिद्ध
त्वादिति चेत् उभयथाप्यशरीरिकर्तृव्यवस्थितिनियमात्। किन्तु
कथञ्चिदुपाधिमादाय स व्यवस्थितां यदा कार्य्यत्वमेवेति सन्देहः
परिशिष्यते गत्यन्तराभावात् सोऽपि निवार्य्यते। न तावद्देह
व्यतिरेकेणानित्यज्ञानसम्भवः तयोः कार्य्यकारणभावनियमात् ततो
नित्यम्भवेत् ततः सर्व्वविषयञ्च नियतविषयतायाः अनित्यत्वेन व्याप-
नात् विषयनियमस्य सामग्रीशक्तिनियमाधीनतया नित्यात्तस्याः

इच्छाप्यनुपादाय निवर्त्तमानाया अनित्ये विश्रामात् सर्व्वगोचरे च ज्ञाने सिद्धे चिकीर्षाप्रयत्नयोरपि तथाभावः तदेकविषयत्वात्तयोः । तथा च कश्चिदुपाधिमादायाशरीरपूर्व्वकमपि किञ्चिदेव कार्य्यं कर्तृपूर्व्वकं भविष्यतीति शङ्कापिशाच्याः कावकाशः । एवमन्यथाप्यनया दिशोपाधिशङ्का निराकरणीयेति निरुपाधिसम्बन्धसिद्धिः । विपक्षसम्भवे च साधनप्रसक्तसाध्यसद्भावसिद्धौ साध्याभावप्रयुक्तसाधनाभावलक्षणस्य व्यतिरेकस्यापि सिद्धेर्न तदर्थम् पृथगपेक्षेति । द्वितीयेपि अवधानसम्पुटमवधाय कश्चिल्लक्ष्यताम् । तथाहि दण्डादिषूदासीनेषु दृश्योऽदृश्यो वा कारकव्यापारानिर्भागवृत्तिश्चेतनो निवृत्तो न वेति त्वमेव प्रष्टव्यः । नचेत् कुतः कारणान्युदासते निवृत्तश्चेत् कथमदृश्यव्यतिरेकसंशयः तथापि दृश्यस्यान्वयः तादृशस्य व्यतिरेकोप्युपपद्यत इति चेत् कोऽत्र विप्रतिपद्यते कारकप्रयोक्तुरुभयथापि तुल्यत्वात् । देही तादृश इति चेत् कोऽस्यार्थः किं देहद्वारैव कारकाणि प्रयुङ्क्ते चेतनः आहो देहं प्रयुञ्जान एवेति । न पूर्व्वः देहस्यापि कारकतया देहान्तरप्रयोज्यतायामनवस्थापातात् । न द्वितीयः विषशकलचालनादौ व्यभिचारात् । देहं धारयन्निति चेत् सोऽयं देहोधार्य्यः किं कारकतया तत्कारकान्तरप्रयोगार्थम् अथ स्वकर्म्मोपात्ततामात्रेण । प्रथमे न विवादः देहस्य क्वचित् कार्य्यकारणतयाधिष्ठाननियमात् यत्रापि न तत्कारकं तत्रापि तदधिष्ठेयमिति तु कश्चेतनोऽभिदध्यात् । द्वितीयेऽपि यः साक्षादधिष्ठातुमशक्तः स साक्षादधिष्ठेयमुपादाय तत्प्रयुञ्जीत नत्वेकस्य साक्षादधिष्ठानयोग्यम् अन्यस्यापि तथेति नियमः देह एव व्यभिचारात् तृतीये त्वजागलस्तनकल्पः कायेनोपयुङ्क्तां स्वविवेचने सन्निवेशयति तत् यथा धूममात्रं प्रति तार्णदहनान्वयव्यतिरेकयोरालोकवत्तेति । यदि चाकारकस्य तत्प्रयोगद्वारकस्यापि देहस्यावश्यमपेक्षा स्यात् यएव कुलालकायवान् घटस्य कर्त्ता सएव करभशरीरवानपि दण्डा

रीम् प्रयुञ्जीत। न खलु स्वकर्म्मोपायज्ञतामात्रेण करभकुम्भकार शरीरयोः कश्चिद्विशेषः। कार्य्यविशेषे कायविशेषोऽनुपयोग्यप्यपेक्षणीयइति चेत् न च कार्य्येऽनुपयुक्तञ्चावश्यापेक्षणीयञ्चेति व्याघातः। अव्याघाते वा कुम्भे कर्त्तव्ये करभशरीरमप्यवश्यमपेक्षणीयमविशेषादिति तस्मात् सन्दंशवदयःपिण्डवत् कारकप्रयोजकतयैव शरीराधिष्ठाननियमो न तु शरीरत्वेनैव न च शरीरस्य सर्वत्र कारकत्वं प्रयोजकत्वं वेति। एवन्तर्हि न प्रतिनियतदेहाधिष्ठातृ सिद्धिः चक्षुरादिकारकाधिष्ठातृसिद्धेरिति चेन्न वादान्तरत्वात् यद्यपि तत्प्रस्तावः तदापि न कार्य्यमात्रेण कारकाधिष्ठानमात्रेण वा तदनुमानं ततः कर्तृमात्रसिद्धेः किन्तु सर्वभयशोकसिततादिलिङ्गस्तान्युन्नीय तैर्भोक्तुरनुमानमिति न किञ्चिदेतत्। तृतीयेऽपीर्ष्याकषायिते चक्षुषी निमील्य न्यायानुसारैः श्रूयताम् इह जगति नास्त्येव तत्कार्य्यन्नाम यत् कारकचक्रमवधीर्य्यात्मानमासादयेदित्यविवादं तच्च सर्वं चेतनोपहितमर्य्यादम् अन्यथा तत्तत्याव्यवस्थानुपपत्तेः। तथाहि आधेयाधारकोपहितमर्य्यादमधिकरणस्य रूपमाधारत्वात्। अपनेयापगन्तृकारकोपहितञ्च रूपमपादानस्य तदवधित्वात्। करणीभूतकर्म्मोपहितञ्च रूपं सम्प्रदानस्य तदभिप्रेतत्वात्। कारणोपहितञ्च रूपं कर्म्मणः तद्व्याप्यत्वात्। कर्त्रुपहितञ्च रूपं करणस्य साक्षात्तद्व्यापारविषयत्वात्। समस्तकारकोपहितञ्च रूपं कर्त्तुस्तत्प्रयोजकत्वात् ज्ञानचिकीर्षाप्रयत्नाधारत्वव्यवस्थितेश्च न चक्रकेतरेतराश्रयदोषः। एवं सति कर्तृत्वात् स्वेतरदुपहितसीमसमस्तकारकव्यावृत्तावकारककार्य्योत्पत्तिप्रसङ्गइति स्थूलः प्रमादः। भवेदेवं यदि कर्त्तुः कारकमात्रस्य व्याप्तिः स्यात्। सैवतु कुतइति चेत् कुतः पुनरव्याप्तिः नहि षड्भ्योऽन्यत् कर्त्तृनुपहितं कारकमस्ति। न चैषामेव कर्त्तृप्रधानशून्यं लक्षणमस्ति एकैकमपोह्यापि शेषतः कार्य्यसम्भावनायां सर्वापोहसम्भावनाप्रसङ्गात्। न च समस्तविशेषापोहे सामान्य

स्थितिः यतः घट्कव्यापृतावपि कारयमाणतः कार्य्यप्रत्याशा स्यात् एवमप्रवृत्तौ तु सर्वप्रवृत्तिरप्रयुक्ता प्रवृत्त्यभावेन व्यवस्थितेः ।

अथ मतं तवैवेयं प्रक्रिया यस्यानु कार्य्यमात्रानुविहितभावाभावं चेतनं वा चेतनं कारकमुच्यते संहतौ च सर्वं स्वप्रधानमुपादाने तद्व्यवस्था तु कथञ्चिदिति चेन्न तथापि निरुपादानत्वप्रसङ्गात् । जातिप्रतिनियतहेतुत्वेन तदवश्यमुपेयं तस्य प्रमाणसिद्धतयापह्नोतु-मशक्यत्वादिति चेन्न उपादानमात्रस्य तद्धेतुत्वे निमित्तवैचित्र्येऽप्येक जातीयत्वप्रसङ्गात् । निर्निमित्तं वा प्रसज्येत उपादानादेव तथा विधात् तदुत्पत्तेर्न किञ्चिदेतत् । कस्मात् सामग्र्याः सर्वसम्भवइति चेत् कुत एतत् निमित्तसहितस्यैवोपादानस्य प्रत्यक्षानुपलम्भाभ्यां कारणत्वावधारणादिति चेन्न दृश्यमात्रविषयत्वात्तयोः । दृश्यत्वं तस्य कथञ्चिदविवक्षितमिति चेन्न चेतनेऽपि तथा किन्न स्यादिति तस्मादुपादाननिमित्तयोर्यथा परस्परसहितयोरेककार्य्ये शक्तिस्तथा चेतनाचेतनयोरपीत्येकानिवृत्तावितरनिवृत्तिप्रसङ्गः । अपि च मृत् पिण्डदण्डादिषु सव्यापारे पारतन्त्र्यं तावत् नियमेनोपलभ्यते ।

तदिदं दण्डादिमात्रानुबन्धं वा स्यात् अदृष्टविशेषापेक्षानुबन्धं वा अचेतन्यमात्रानुबन्धं वेति निपुणं निरूपय । तत्र न प्रथमः वेमादीनां स्वातन्त्र्यप्रसङ्गात् । तेषां वेमादित्वमात्रानुबन्धमिति चेन्न दण्डादीनां स्वातन्त्र्यप्रसङ्गात् नचैतत् कार्य्यविषयनियतं गवा-भ्याजनादौ दण्डादीनां स्वातन्त्र्यप्रसङ्गात् । न द्वितीयः तस्य जाति विशेषानियतत्वे घटार्थमपि कदाचित्तेषां स्वातन्त्र्यप्रसङ्गात् तन्नि-यतत्वे सएवोच्यताम् । नच घटपटशकटकटाहादिगतं दण्डवेमवासी सन्दंशादिगतं वा सामान्यमुपलभेमहि । अस्त्वसौ यतः शरीरि कर्तृत्वानुमानमिति चेन्न घटादावेव तथाभावात् । अस्तु वा संस्थान विशेषः नच तस्यापि निबन्धनं तस्याभावेपि जलादीनाञ्चेतनप्रेर्य्यत्व-दर्शनात् । नच शरीरप्रेर्य्यं यत्तदेव चेतनप्रेर्य्यमिति नियमः शरीर

स्यैव स्वातन्त्र्यप्रसङ्गादित्युक्तप्रायम् । तस्मादप्येतन्न्यायमात्रनिबन्धन मेतद्वृक्षादिषु तथाच परमाणुवृक्षादिष्वपि तस्य भावात्तथाभावो दुर्वारः ।

तदेतत् कार्य्यं कारणवत्तया व्याप्तं सा च विपक्षेऽसम्भवन्ती स्वव्याप्यामुपादाय व्यावर्त्तमाना स्वपक्षे विश्राम्यतीति उभयमुखी प्रतिबन्धसिद्धिः । कः पुनरयं प्रतिबन्धः स्वाभाविकः सम्बन्धः कः स्वाभाविकार्थः निरुपाधित्वं कः पुनरुपाधिः साध्यप्रयोजकं निमित्तान्तरं किं वास्य लक्षणं साधनाव्यापकत्वे सति साध्यव्यापकत्वे सति साध्यव्याप्यत्वं कथं पुनरेवंलक्षणकोऽर्थः प्रत्येतव्यो निराकर्त्तव्यो वा विपर्य्ययाविरोधबाधकाभ्याम् । किं बाधकम् अन्वयव्यतिरेकविषयभूयोदर्शनसाहायकमाचरन्नुत्तरदुस्तर्कः । स चात्माश्रयेतरेतराश्रयचक्रकानवस्थानिष्टप्रसङ्गभेदेन पञ्चविधोपि क्वचिद्व्यभिचारं निराकुर्वाणः क्वचित्तन्निबन्धनमुपाधिमवधारयन् सहायीभवतीति फलतो न कश्चिद्विशेषः । तदुदाहरणानि चाग्रे एव यथायथं परिचाययिष्याम इति ।

अथ न्यायदुर्बलस्य प्रतिबन्दीकरणं यदुतैवं ग्रामविनाशस्यापि सिद्धिः स्यात् दृश्यमाननियतत्वात् प्रत्यक्षबाधस्य । नच दृश्यत्व निवृत्तेरेव विनाशत्वनिवृत्तिः अव्यापकनिवृत्तावव्याप्यनिवृत्तेरयोगात् विनाशगतकार्य्यत्वप्रयुक्तत्वाच्च दृश्यत्वव्याप्तेः तेन तन्निवृत्तावपि नाकार्य्यस्य गृहस्य निवृत्तिरिति । एतच्च सहार्थसिद्ध[illegible]स्य न परिभ्रंशाय निष्प्रयोजनविषयत्वात् । तथापि सम्भावितस्याकीर्त्तिभिया नोपेक्षामर्हतीति प्रतिबन्दिरिति चेत् तर्हि साभीवीरिय मुन्मोच्यते । तथाहि अर्थतः ग्रामीयगृहसाधनप्रवृत्त इदं प्रष्टव्यः किन्ते विनाशशब्देनान्यदेव किञ्चिद्विवक्षितं रोगादिविनाशजातीयं वा प्रथम् । प्रथमे सिद्धसाधनं बोधविरोधश्च बोधे तद्विपरीतस्यैवार्थस्य विनाशशब्देनाभिधानात् । द्वितीये त्वन्वयव्यतिरेकाभ्यां संस्थानविशेषकार्य्यत्वमेव व्यवहारकाण्डावाक्यादभिव्यक्तेः कथं

तदर्श्चितेषु परमाण्वादिषु तदसम्भवः सम्भवे वा न कथं तत्र घटत्वा-
दिकमपि । ओमिति ब्रुवतः कथं न जातिसङ्करप्रसङ्गः कारणं विना
कार्य्याभावप्रसङ्गो वा नवा अन्वयव्यतिरेकौ कार्य्यकारणभावे प्रमाण
मिति सर्वं समाकुलमाकुलमतेः । तस्मादतीन्द्रियं नित्यं वा विपक्ष
मेव न भवति यत्र विपक्षं तत्र प्रत्यक्षबाधितमिति कुतस्तदनु-
मानावकाशः ।

एवं तर्हि नित्यं ज्ञानमित्यपि व्याहतम् इन्द्रियादिविकारमात्र
व्यङ्ग्यत्वाज्ज्ञानत्वसामान्यस्येति चेन्न अतद्भावत्वादतदाक्षेपक-
त्वाच्च । नहि मात्रत्वस्य वन्ध्यात्ववन्नित्यत्वस्याभावे ज्ञानत्वमचेतना-
नामपि चेतनत्वप्रसङ्गात् । नापि नित्यत्वं ज्ञानत्वाभावमाक्षिपेत्
ज्ञानत्वेनाविरोधात् विरोधमूलस्य विपक्षबाधकस्याभावात् दर्शना
दर्शनयोश्चार्थप्रवणत्वोपाधिग्रस्तत्वात् रूपत्वानित्यत्वयोश्चक्षुर्मात्रग्राह्य
व्यक्तित्ववत् । नचेन्द्रियादिविकारो ज्ञानत्वाभिव्यक्तिहेतुः अर्थं प्रवण
व्यक्तिमात्रस्यैव तन्निरपेक्षस्यातथाभावात् एतदनपेक्षस्य तु तस्याति
प्रसञ्जकत्वात् । अथ बुद्धोपद्रवाः केवलस्य कर्तृत्वे विश्वस्य वैश्वरूप्य
व्याघातः सततोत्पत्तिप्रसङ्गश्च अदृष्टापेक्षायाञ्च कल्पनागौरवं तत
एव तदुपपत्तेः स्वार्थं प्रवृत्तावनीश्वरत्वप्रसङ्गः परार्थं प्रवृत्ताव-
दुःखमयसर्गप्रसङ्गः । एवमेव प्रवृत्तावचैतन्यम् एकत्वे प्रमाणाभावः
अनेकत्वे त्वसार्वज्ञ्यं प्रतिनियतसामग्रीवि[illegible]दित्यादयः । तत्र
कारणचक्रस्यैकदेशमुपादाय शेषवैयर्थ्यप्रसञ्जने सर्ववैयर्थ्यप्रसङ्गः ।
अन्वयव्यतिरेकाभ्यां सिद्धकारणभावस्य न वैयर्थ्यमिति चेत् अनु-
मितकारणभावस्याप्येवं प्रमाणसिद्धत्वाविशेषात् । यच्च यदर्थं क-
ल्पितं तस्य तेनैव विफलीकरणे सर्वत्रादृष्टमुपादाय दृष्टवैफल्य
प्रसङ्गः । तथाच तदपि न स्यात् प्रमाणाभावात् दृष्टे नष्टादृष्ट
मुन्नीयते परार्थंच प्रवृत्तिः स्वार्थाभावात् । नच दुःखसृष्ट्या कारु-
ण्यापवादः जनकाध्यापकचिकित्सकादिषु व्यभिचारात् । अथ

दोर्ज्जन्यादेव किं नैवमिति चेन्न दोषाभावात् तदभावश्च मोहाभावात् तदभावोऽपि सर्वज्ञत्वादि[illegible]एकद्यणुककारी तु परमाणुमहत्त्वमुप-कार्य्यत्र्यणुकादिभोगपर्य्यन्तं द्रव्यादिपदार्थषट्कञ्च जानाति नून मित्यविवादम् एषामुपादानादिरूपत्वात् अवच्छेद्यावच्छेदकभावापरि-ज्ञाने चोपादानादिपरिज्ञानानुपपत्तेः। यश्च यज्जातीयमेकं कर्त्तुं ज्ञातुं वा समर्थः स तज्जातीयं सर्वमेवेति नियमः। सामर्थ्यस्य जाति नियतत्वात् केवलं समर्थोऽपि सहकार्य्यसन्निधेर्न कुर्य्यात् न जानीयात् तत्र प्रथममिष्यतएव कार्य्यस्य देशकालनियमोपलम्भात्। द्वितीयन्तु सम्भवेदपि यदि कार्य्यमस्य ज्ञानं स्यात्। नच तत्तथा कथमिति चेत् शरीरापाये तदाश्रितानामिन्द्रियादीनामपायात्। नचान्वय व्यतिरेकसिद्धहेतुभावस्याभावेऽपि हेत्वन्तरात् कार्य्यजन्म निर्हेतुकत्व प्रसङ्गात्। नचाहेतुकं कार्य्यं नाम ततः स्वतः सिद्धैवास्य ज्ञान चि-कीर्षाप्रयत्नशक्तिर्यद्गोचरा तज्जातीयसमस्तगोचरेति सर्वज्ञसिद्धिः। शरीरापायएव कथमिति चेत् दृष्टस्य प्रत्यक्षबाधितत्वात् अदृष्ट स्यापि सावयवतया मूर्त्ततया च निविडतरपाषाणमध्यवर्त्तिनि भेक शरीरादौ कार्य्ये कर्त्तव्ये नाभप्रस्य प्रवेशः। नच परमाणुरूपं तच्छ-रीरम् अनन्तरालत्वे निर्म्मनस्क तयेन्द्रियाश्रयत्वानुपपत्तेः नच वह्नि र्पवनो ज्ञानजननोपयोगि शरीरवैयर्थ्यप्रसङ्गात्। नच दविष्ठ एव सूर्य्यादि स्वत् कुर्य्यादिति साम्प्रतं कारकानधिष्ठानात् शरीरस्य तदायतनतया प्रयत्नस्याव्यापकत्वात्। तथापि च व्यापकत्वे असम-वायिकारणानुरोधेनाकारकतया तदेव नित्यत्वम्। नचोद्देशमात्र सम्बन्धेन क्रियाहेतुत्वम् अस्मदादिप्रयत्नस्यापि तथाभावप्रसङ्गात्। नच संयुक्तसंयोगादधिष्ठानं साक्षादधिष्ठानस्य विवक्षितत्वात्। विषापनोदादौ कथमिति चेन्न तत्रास्मदादेर्ज्ञानमात्रं प्रति यत्नस्या विरोधात् विषापनोदादौ तु तत्सहकारियत्नजन्यादृष्टसहकारिणो वाऽन्यस्यैव तन्वो यत्नः क्रियाहेतुरिति। सर्गादौ तु न शरीरान्तो-

पीति सर्व्वथाकलेवरविगमादकारणकतया बुद्धेः सर्व्वज्ञत्वमनिवार्य्यं
विशेषात् कर्त्तुरेकस्येति ।

अस्तु तावदसौ सर्व्वज्ञः कर्त्ता । वक्ता तु कथमिति चेत् वचन
शक्तौ सत्यां परार्थैकतानत्वात् यो हि हिताहितविभागं विद्वान् परा-
र्थाभिप्रायः स स्थानकरणपाटवे सत्यविदुषेऽवश्यमुपदिशेत् यथान्धाय
दक्षिणेन याहि वामेन मागा इति पृथग्जनोऽपि तथा च भगवानिति
स्थानकरणपाटवमसिद्धं देहाभावात् तेषां ताल्वादिविवृतादिरूप-
त्वात् । नच तदन्तरेणैव तन्निष्पत्तिः तदुत्पत्तेरवधारणात् । नच
तत्कारणमनधितिष्ठत एतत्कर्त्तृत्वमीश्वरस्यापीति चेन्न यस्य कार्य्यस्य
यत् कारणम् अन्वयव्यतिरेकसिद्धं तत्कारणाधिष्ठानयोः स्थूलसि-
द्ध्यर्थं तदवयवपरम्पराकारणाधिष्ठानवदवश्यम्भावनियमात् । नच
सर्व्वत्र कार्य्यं कायः कारणमिति प्रागुपेक्षितः पिष्टत्वादोपदेशानु-
मानम् । तथापि कतम आगमस्तेन प्रणीत इति चेत् वेदायुर्वेदा-
दिरित्यधिकरि कर्णज्वरः सिंहनादः । तथाहि न तावदय-
मायुर्वेदोऽप्रमाणं सम्वादस्य प्रायिकत्वात् विसम्वादस्य काकतालीय
तया कर्त्तृकर्म्मसाधनवैगुण्यहेतुकत्वात् पुनस्तस्मादेव ततएव फल
सिद्धेः । नच निर्म्मूलस्तथा भवितुमर्हति अतिप्रसङ्गात् । नचान्वय
व्यतिरेकावस्य मूलम् आवापोद्वापेन योगानामनन्ततयार्व्वाचीनेना-
शक्यत्वात् विषादौ तथाकरणे बहुतरानर्थप्रसङ्गाच्च । कश्च प्रेक्षा-
वाननाकलितवस्तुतत्त्वः पाटनक्षोभणदारणाग्निबन्धनलङ्घनादिकं
योग्यायै कारयेत् कुर्य्याद्वा । नचोपदेशस्योपदेशपारम्पर्य्यमात्रं
मूलम् अवश्यमुपदेशस्य क्वचित् प्रमाणे विश्रान्तेरिति व्याप्तेः । नच
नित्यागमसम्भवः वाक्यत्वात् । तस्मादतीन्द्रियार्थदर्शिपूर्व्वकोऽयमिति
विशेषः । तथाचानेन दृष्टान्तेन महाजनपरिगृहीतत्वाद्वेदा अपि
सर्व्वज्ञपूर्व्वका इत्यनुमीयते ।

ननु महाजनो यद्यपि पूर्व्वप्रामाणिकवचनस्तदा सन्दिग्धा-

सिद्धविशेषणो हेतुः। अथ बह्वर्थः तदा सुगताद्यागमैरनैकान्तः तेषामपि वा सर्व्वज्ञपूर्व्वकत्वमिति चेन्न बहुत्वातिशयस्य विवक्षितत्वात् कोऽतिशयः सर्व्वदर्शनान्तःपातित्वं कस्तैः परिग्रहः अर्थानुष्ठानं स्वीकृतव्यवहारव्याकरणादिपालनीयत्वं स्वीकृतप्रामाण्यायुर्वेदस्वीकृतार्थत्वञ्च। तथाहि नास्त्येव तद्दर्शनं यत्र सांप्रतमेतदित्युक्तापि गर्भाधानाद्यन्त्येष्टिपर्य्यन्तां वैदिकीं क्रियां जनो नानुतिष्ठति स्पृश्यास्पृश्यादिविभागं वा जनो नानुमनुते व्यतिक्रमे वा चमनस्नानादि प्रायश्चित्तं नानुतिष्ठति। न सर्वत्र सर्व्वो जनएवमिति चेत् माभूत् नहि सर्व्वत्र सर्व्वैर्योगिभिरायुर्वेदार्थो नानुष्ठीयतइति न तस्य महाजनपरिग्रहः अपि तु सर्व्वदर्शनान्तःपातिभिरित्येव। तथापि न सर्वो वेदार्थएवमिति चेत् माभूत् नहि सर्वोवेदार्थएव मपितु कश्चिदपि केनापि एवन्तर्हि सौगताद्यागमार्थोपि कश्चिदहिंसादिः सर्व्वदर्शनान्तःपातिभिरनुष्ठीयतएव कैश्चिदिति सोऽपि महाजनपरिगृहीतः स्यात्। न सन्देहात् किमहिंसादिर्वैदिकएवार्थो विडालव्रतन्यायेन श्रद्धापादनाय शौद्धोदनिप्रभृतिभिरुपनिबद्धः आहोस्वित् स्वयं प्रदृष्ट एवेति। न तावत् स्वयं दृष्टएवेति अमणकाद्यागमसाधारणत्वात् यस्त्वसाधारणो मण्डलीकरणादिः केशोल्लुञ्चनादिर्वा नासौ सर्व्वैरनुष्ठीयते वैदिकस्त्वसाधारणएव निषेकादिस्तथेति। अपि च वाचकापभ्रंशविभागोऽस्ति वस्तुतानवा तद्व्यवहारस्तावत् सर्व्वैरेव तीर्थिकैरायोणानेन स्वीकृतः तथा शिक्षाज्योतिश्छन्दोनिगमनिरुक्ताद्यर्थश्च तेषां वेदरक्षैव परमं प्रयोजनमिति।

स्यादेतत् व्याकरणादीनि तावत् सर्व्वैरेवाभ्युपेतार्थानि वेदा अपि तैः पालनीया भवन्तु तएवेति तु कुतः संसारमोचकागमोपि तत्पालनीयः किन्न स्यादिति चेन्न तत्कर्तृभिस्तथानभ्युपगमात् अच्युत्पादनात् असाधारणलिङ्गाभावात् विरुद्धलिङ्गसद्भावाच्च। नहि वेदशब्दार्थाविव सुगताद्यागमासाधारणशब्दार्थावनुरोध्य तेषां प्रवृत्तिः

यतएवमनुमीयते प्रत्युत विरोधएव तेनतदप्रामाण्यव्युत्पादनात् तस्मात् सर्वाभ्युपेतव्यवहारव्याकरणादिपालनीयतेऽपि वेदानामेव नान्येषां सर्वाभ्युपेतप्रामाण्यैरायुर्वेदादिभिः स्वीकृतत्वैषामर्थः प्रतिपदं तदीय शान्तिकपौष्टिकप्रायश्चित्ततपोजप्यदानहोमाभ्युपदेशात् नचैवभाग स्त्वाप्रमाणमेव तुल्ययोगक्षेमत्वात् । एतदेवासिद्धं प्रक्षेपस्यापि सम्भवादिति चेन्न अध्येत्रध्यापयितृसम्प्रदायाविच्छेदात् अन्यथा-करणे चास्य बहुभ्यः स्यान्निवारणमिति न्यायात् । तस्मादेवंरूपोपि महाजनपरिग्रहोवेदानामेवेति सोऽयमीदृशो महाजनपरिग्रहो वेदस्यासर्वज्ञपूर्वकत्वेऽसम्भवन् सर्वज्ञपूर्वकत्वेन व्याप्यते । यथाहि पूर्वविरुद्धापूर्वव्याकरणवैद्यकादिषु विज्ञानादपरिग्रहस्तथा तथाविधे धर्म्मशास्त्रेपि व्यामोहात्कस्यापि कस्यचिदेव ननु सर्वेषाम् । अथ पूर्वाविरुद्धन्तथापि पूर्वस्य पूर्ववदपरिग्रहे केनचित् परिग्रहे वा कथं तन्मूलस्यान्यस्य सर्वैः परिग्रहः । नच नासीदेव पूर्वं धर्म्म शास्त्रं मानान्तरस्याच वस्तुनि कुण्ठतयानुष्ठानाभावस्य प्रसङ्गात् । तथाच धर्म्माभावे तु तत्कार्य्यस्य सुखस्याप्यभावे रागानुत्पत्तौ लोक समीहोच्छेदे लोकोच्छेदप्रसङ्गः ।

तस्मान्महाजनपरिगृहीतपूर्वपूर्वागमपूर्वकत्वाद्वा प्रवाहनित्यत्वा द्वा प्रलयविच्छेदे सर्गादौ सर्वानुविधेयपुरुषधौरेयपूर्वकत्वाद्वा महा जनपरिग्रहः । ननु पूर्वागमानपेक्षार्वाचीनपुरुषप्रणयनपूर्वकत्वात् पूर्वा गमप्रामाण्याप्रामाण्ययोरुभयथापि तस्य विप्रलम्भकत्वात् प्रामाण्ये हि तद्विरुद्धाभिधानं विप्रलम्भएव अप्रामाण्येप्युपायमविदुषोऽननु-ष्ठाने तदाभासानुष्ठाने वा असर्वज्ञोपदेशोविप्रलम्भएवेति । तन्न न प्रथमः वेदपरम्परानुपलम्भात् अर्वाचीनानां पाठपारतन्त्र्यमात्रेण प्रवाहोपपत्तौ तत्कल्पनायां प्रमाणाभावात् । नापि च द्वितीयः वेदह्रासदर्शनात् यत इदानीमश्रूयमाणस्यापि वेदस्यानुक्तीयतेऽर्थः निबध्यते च मन्वादिभिः पुरुषाणामपचीयमानशक्तित्वाच यथा

श्वमेधराजसूयाद्यनुष्ठानशक्तेरपचयवत्तथाध्ययनशक्तेरपि । न च पूर्व-
मपि नानुष्ठिता एव राजसूयादयः तदर्थस्य वेदवाक्यस्य वैयर्थ्यप्रस-
ङ्गात् । न च नित्यानुमेयवेदसम्भवः वर्णानां नित्यत्वेऽप्यानुपूर्व्याः पाठा-
श्रयत्वात् । न चानुपूर्वीशून्या वर्णाः पदं नाम न चाकाङ्क्षाद्युपेत पद
कदम्बकादन्यद्वाक्यं नामेति गुरुरपि लघुरेव । तस्मात् पुरुषाणामनु-
ष्ठानशक्तिवदध्ययनशक्तिरपि युगक्रमेणापचीयते ततो वेदानां शाखो-
च्छेदः तदर्थानामनुष्ठानोच्छेदः वर्णाश्रमाचारव्यवस्थाविप्लवश्चेति ।

अतएव भगवतो व्यासस्य पुरुषशक्त्यपचयमवेक्ष्य वचनानि स्वल्पा
युषः स्वल्पसत्वा इत्यादीनि वेदोत्सादमवेक्ष्य प्रतिमन्वन्तरञ्चैषा श्रुति-
रन्या विधीयते इत्यादीनि अनुष्ठानोत्सादमवेक्ष्य दानमेकं कलौ युग
इत्यादीनि आचारविप्लवमवेक्ष्य प्रजास्तत्र भविष्यन्ति शिश्नोदरपरा
यणा इत्यादीनि । तथा च श्रूयमाणा अपि वेदावयवा उत्सादमुपया-
स्यन्ति वेदत्वात् वाक्यत्वाद्वा उत्सन्नशाखावदिति न्यायः यथा चैतत् तथा
पर्वता अपि चूर्णीभविष्यन्ति पार्थिवत्वात् घटवत् समुद्रा अपि शोष-
मुपयास्यन्ति जलाशयत्वात् स्थलीपल्वलवत् सूर्य्योऽपि निर्वास्यति तेज
स्त्वात् दीपकवत् ब्रह्मापि प्रेष्यति शरीरित्वात् अस्मदादिवत् इत्या-
द्यागमाविरोधेनानुमीयताम् । स्यादेतत् भविष्यदुच्छेदोऽनुमितः सतु
भूतोऽपीति कुत इति चेत् अतएव यत उत्सादानन्तरं पुनः सर्गेण
भाव्यम् । अन्यथा संसारिणां कृतहानप्रसङ्गः । नहि विश्वनिर्म्माण
मन्तरेण भोगज्ञानयोः सम्भवः । न च तेन विना कर्म्म प्रवाहसंरोधः ।
ततो यथा भविष्यन् विश्वसर्गोच्छेदपूर्व्वकस्तथायमपीति । समय
नियमस्तु प्राणिनां कर्म्मवैषम्येऽपि वर्षादिनियमवदुदयास्तमयनियम
वद्वा द्रष्टव्यः कर्म्मणामेवंस्वभावत्वात् । एतदर्थमेव हि पुराणेषु
सृष्टिप्रलययोर्दिवसरात्रिव्यवहारः । तथापि सर्वप्राणिनामयौग-
पद्ये किं प्रमाणमिति चेत् द्विःसप्तभौमभुवनप्रासादभङ्गेऽपि निर्भया
एव ग्रामकुटीहट्टविहारिणः शरीरिण इति महती प्रत्याशा ।

तस्मात् सर्गादिमहाजनमन्वादिपरिग्रहपूर्वकोऽयमद्य यावदनु-
वर्त्तत इति नानवसरदोषावकाशोऽपीति युक्तमुत्पश्यामः । तदेव कथं
मन्वादिभिः परिगृहीता वेदा इति चेत् आयुर्वेदवदाप्तोक्तत्वनिश्चयात् ।
स एव कुत इति चेत् अध्यक्षतः तेषामप्यतीन्द्रियार्थदर्शित्वात् । तादृशा-
न्तेषां तत्परिग्रहेण किं प्रयोजनमिति चेत् अस्मद्व्यवहारेणास्मदप-
त्यानि व्युत्पद्यन्ताम् । तथा च धर्म्मसम्प्रदायः प्रवर्त्ततामिति भूतदया
स्वाधिकारसम्पादनञ्च । अथवा सर्गान्तरगृहीतव्याप्तिप्रादुर्भावे
सुप्तप्रतिबुद्धवत् पितृत्वेनाविप्रलम्भकत्वमुच्चावचभूतनिर्म्माणदर्शनेन
सार्वज्ञ्यमनुमायाप्तत्वनिश्चयस्तेषाम् तस्य । यद्वा भगवानेव सम्प्रदाय
प्रवर्त्तनव्यसनव्यग्रः कायसहस्राणि व्युत्पाद्यव्युत्पादकभावव्यवस्थि-
तानि निर्म्माय तदातनं महाजनं परिग्राहितवान् नटनोपाध्याय-
वत् स्वयं नटित्वेति सर्वं सुस्थम् । पक्षत्रयेपि चात्र पुराणादिसङ्कथा
प्यस्तीति । स्यादेतत् परमेश्वरप्रवर्त्तितोप्ययमेवं वेदसम्प्रदायः सर्गा-
न्तरवेदापेक्ष एवेति सेश्वरमीमांसापक्षः कपिलपक्षो वा स्यादिति चेत्
किमर्थं पुनरियमपेक्षा पूर्ववेदे जगन्नाथस्य नतावद्वेदार्थोपलम्भाय
नित्यसर्वज्ञत्वात् । नापि वचनार्थं स्वभावतः सर्वकर्त्तृतया आदर्शान
पेक्षणात् । नापि विरोधपरिहारार्थं प्रतिपाद्यानां तदनुसन्धान
विधुरत्वात् अवैधुर्य्ये वा कर्त्तुः सार्वज्ञ्यविज्ञानादेव समस्तविरोध
विधूननात् । तथापि पूर्वसर्गान्तरादेव व्यवहारोपि परमेश्वरस्य
गोचर इति चेत् कः सन्देहः यदिवैतदेव वेदस्य प्रवाहनित्यत्वं न
केवलं तस्य किन्तु घटादेरपीति न्याय एव दर्शनमन्यथा मीमांसैवेति
क्व सेश्वरमीमांसेति । तस्मादुक्तरूपः परिग्रहो नान्यथा सम्भवतीति
प्रतिबन्धसिद्धिः । तथाचाप्तोक्तत्वात् प्रामाण्यमिति । कथं पुनः
सुगताद्यागमेषु अनादरश्छान्दसानां वेदविद्वेषिदर्शनान्तःपातिपुरुष
प्रणीतत्वादिति माभ्रमिष्ठाः जिनेन्द्रजगदिन्द्रप्रभृतिप्रणीतेष्वप्याद-
रात् तत् कस्य हेतोः महाजनपरिगृहीतपूर्वागमाविरुद्धतया तदनु-

सारित्वात् कुतस्तर्हि सिद्धप्रामाण्यवेदविरोधात्। कथन्तर्हि कति
पयैरपि तत्परिग्रहः आयासभीरुभिर्दुःखमयजात्यकर्म्मविद्वेषात्
उत्तरगर्त्तीयतन्तुवायवत् नत्वेवं वेदे कर्म्मण्येव निर्भरत्वात् त्रैव-
र्णिकवहिःस्थैरनधिकारिभिरनन्यगतिकत्वात् कीर्त्तिप्रज्ञाकरवत्।
नत्वेवं श्रुतौ परैः पूज्यमानानामप्यप्रवेशात् इतः पतितानामपि परै
रुपादानात् भक्ष्यपेयाद्यैहिकार्थिभिश्च रागात् सरभादिवत्। नत्वेव
माम्नाये तद्विभागव्यवस्थापकत्वात् कुतर्काभ्यासिभिश्च मोहात् काला
चार्य्यादिवत्। नत्वेवं ब्रह्मणि आबालभावं प्रवृत्तेः अविवेकिभिश्च
पाषण्डसंसर्गात् श्रीखण्डकादिवत्। नत्वेवं प्रकृते पित्रादिक्रमेण
प्रवर्त्तनात् योगाभ्यासाभिमानिभिरर्थग्रताभिसन्धेः सुभूत्यादिवत्।
नत्वेवं प्रस्तुते प्रथमतः कर्म्मकाण्डएव नियोगात् अयोग्यैराजीवनात्
सामान्यश्रमणकवत्। नत्वेवं प्रकृते आगन्तुकानामनधिकारात्
कुहकवञ्चितैः समीचीनप्रत्ययात् द्वीपङ्करदर्शि बालिशवत्। नत्वेवं
प्रकृते तदभावात् किन्तु महाजनपरिग्रहादतुप्रामाण्यमनुमाय
आयुर्वेदे नैरुज्यकामवदिति।

किं पुनरमीषां मूलं नह्येतावन्तो ग्रन्थराशयः परविप्रलम्भार्थं
प्रणीयन्ते। न च विश्वमेव विप्रलभ्यमिति चेत् भवतु किञ्चिन्मूलं
किमनेन चिन्तितेन अतिनिर्बन्धे तु क्षणिकनैरात्म्यादिप्रतिपाद-
कानां तर्काभासः प्रतिपादितश्च तथा शून्यसाकारादिप्रतिपादकानां
तु दुरभ्यासः योगशास्त्रेऽभ्यस्यतः स्वरूपशून्यत्वमेव भाव्यमेवेति
प्रतिपादनात्। चैत्यचीवरादिप्रतिपादकानान्तु स्वस्थितिमभिसन्धाय
दर्शनान्तरस्थितिद्वेषः स्वस्थितौ प्रमाणमनपेक्ष्य परस्थितौ विगानात्
ब्रह्मचर्य्यादिप्रतिपादकानान्तु वेदाएव न्यायाविरुद्धं परतश्चोक्तमप्य-
नेनाप्यप्रसिद्धेर्गृह्यतइति विमर्शात्। मन्त्रकोषप्रतिपादकानान्तु प्रणव
वीजजातयः सर्वसाधारण्यः। श्रद्धेयदेवतानामाकृत्यधिकः श्रद्धा
परिगृहीतस्वाकारो देवतेति स्वल्पसमालोचः सत्यतपःशालिनां वचनं

मन्त्रः विषयवत्यां चिन्तायां चित्तस्थैर्य्यं प्रयोजनं कथमन्यथा महर्षीणां शापानुग्रहक्षमता कथं वा चतुर्भुजाष्टभुजादिव्यवस्थितिः दुरूहाद्विति एकविप्रलम्भार्थं वा केनचित् कियदेव प्रणीतम्। तेन अनुष्ठितमपरैस्तदनुयायिभिर्गृहीतमनुष्ठितं व्याख्यातं विवर्द्धितञ्चेति किमनुपपन्नम्। तस्माद्विरुद्धागमव्युदासेन वेदाश्चार्वाचीनपुरुषपूर्वकत्वशङ्काव्युदासेन परमेश्वरप्रणीतत्वादेव भूतार्थभागस्याप्रामाण्यशङ्काव्युदासेन प्रमाणमेवेति नियमः। कथमैश्वरमिति चेत् महाजनपरिग्रहस्य तत्साध्यस्य वा सर्वज्ञपूर्वकत्वस्य पुरुषदोषाभावस्य वा प्रामाण्यहेतोर्भूतभाव्यर्थभागयोः साधारणत्वात्। किं तस्य फलमिति चेत् स्वार्थप्रतिपादनं किं तेन प्रयोजनं यथायथमुपादानं हानं मोक्षश्च तत्रानर्थकहेतूनां तत्त्वज्ञानाद्धानम् अर्थहेतूनामुपादानम् आत्मनो मोक्षश्चेति।

कः पुनरयं मोक्षः आत्यन्तिकी दुःखनिवृत्तिरात्मनः किमात्यन्तिकत्वं तज्जातीयात्यन्ताभावविशिष्टत्वं कथं कारणमात्रोच्छेदात्। अपुरुषार्थोऽयमिति चेत् असत्यस्याकाम्यस्याशक्यस्य दुरन्तस्य च तथाभावात्। नन्वयं तथा सत्योह्ययं प्रमाणसिद्धत्वात् सर्वैरभ्युपगमाच्च काम्यश्च दुःखस्य स्वभावहेयत्वात्। सुखार्थन्तद्धानमिति चेन्न अतद्धेतुत्वात् व्याप्तेरिति चेन्न असिद्धेः। नहि दुःखाभावः सुखेन व्याप्यतइति सुखं तावत्तेन व्याप्यतइति चेत् तर्हि सुखे सत्यवश्यं दुःखाभावो भवेदिति सुखप्रार्थनेपि विपरीतापत्तिः नावेद्यत्वादसौ काम्यत इति चेन्न दुःखार्त्तानां तदभाववेदनमभिसन्धायैव तज्जिहासादर्शनात् कथमन्यथा देहमपि जह्युः अविवेकिनस्ते इति चेत् किमत्र विवेकेन इष्यमाणतामात्रानुबन्धित्वात् पुरुषार्थस्य गम्यागम्ययोः काम्यत्ववत्। बहुतरानर्थप्रसक्तिशङ्कया तु शास्त्रमनुकूलयन्तस्ते इतरेभ्योभिद्यन्ते। अपिचैवं कण्टकादिजन्यदुःखनिवृत्तिरपि पुरुषार्थो न स्यात् अवेद्यत्वात् प्रथमं विद्यते असाविति चेत् तुल्यं

मोक्षेऽपि नाध्यक्षेणेति चेत् तर्हि दुरितक्षयकामस्य कर्म्मानुष्ठानानर्थक्यप्रसङ्गः तदभावतत्फलाभावयोरनध्यक्षत्वात् । उपलब्धियोग्यतापन्नानिष्टनिवृत्तिरूपत्वादयमदोष इति चेत् तुल्यं दुःखवत्सुखस्याप्युच्छेदादकाम्योऽयमिति चेन्न तृष्णया दोषतिरस्कारेण प्रवृत्तिवदलम्प्रत्ययेन गुणतिरस्कारान्निवृत्तेरपि दर्शनात् मधुविषसंपृक्तमन्नमत्रोदाहरणम् । सन्ति केचनालम्प्रत्ययवन्तः नच समर्थं दुःखस्यैव प्राचुर्य्यात् दुःखे सुखहेत्वनुषङ्गेऽपि सुखे दुःखहेत्वनुषङ्गनियमाच्च । तथाहि न्यायोपार्ज्जितेष्वेव विषयेषु कियती सुखखद्योतिका कियन्ति वार्ज्जनरक्षणादिदुःखदुर्द्दिनानि । अन्यायोपार्ज्जितेषु तु यद्भविष्यति तन्मनसापि चिन्तयितुमशक्यं विदाङ्कुर्वन्तु सन्तो । यदि कण्टकादिजन्येषु दुःखेषु लेशतोपि सुखानुसङ्गः । अस्ति तु स्वर्गादिसुखेष्वपि बहुलोदुःखशल्यसम्भेदः अतएव विविच्य भुज्यतां तुषतण्डुलवदित्यशक्यमिति । शक्यस्यायं निवर्त्यत्वात् स्वन्तस्यापरावृत्तेः अनर्थवासनाननुकूलाभिसन्धित्वाच्चेति । नित्यन्तु सुखं न सत्यं योग्यानुपलम्भबाधितत्वात् ।

श्रुतिस्तत्र प्रमाणमिति चेन्न योग्यानुपलम्भबाधिते तदनवकाशात् अवकाशे वा ग्रावप्लवनश्रुतेरपि तथाभावप्रसङ्गात् । नापि काम्यं सदा सत्त्वात् नहि यद्यस्यास्ति स तत् कामयते भ्रान्तेरेवं कण्ठचामीकरवदिति चेन्न स्वसम्वेद्ये तदभावात् । नापि शक्यं नहि तन्निर्वर्त्यं नित्यत्वात् नापि विकार्य्यम् अपरिणामित्वात् । न संस्कार्य्यम् अनाधेयातिशयत्वात् न प्राप्यं नित्यसम्बन्धत्वात् न ज्ञेयं ज्ञानस्यापि नित्यत्वात् अनित्यत्वे वा शरीरादिकारणापाये तदनुत्पत्तेः उत्पत्तौ वा तेषामकारणत्वप्रसङ्गात् । तथाच सर्वः सर्वदर्शी स्यात् आत्ममनःसंयोगादेः सर्वत्राविशेषात् ज्ञानज्ञेययोर्नित्यत्वेपि तत्सम्बन्धो जन्यते । सच षट्पदार्थव्यतिरेकादुत्पन्नोपि निवर्त्तते प्रध्वंसवदिति चेत् भावाभावयोः प्रकारान्तराभावात् । तत्र स नाभावः प्रतियोग्य-

नुपपत्तेः भावत्वेऽवश्यमुत्पन्नोनिवर्त्तेत उपाध्यन्तराभावात् । अविद्या विध्वंसनमेव तत्प्राप्तिरिति चेत् अत्र न नोविवादः । नन्त्वेकविंशति विधदुःखव्यतिरिक्ता अविद्या नाम तद्विध्वंसनञ्च पुरुषार्थइति प्रतिपादनादिति दुरन्तञ्च तत् तदभिसन्धेः सुखसंस्कारसहकारितया तदुद्भवे विशिष्टसुखाभिलाषिणोवैषयिकेपि प्रवृत्तिसम्भवात् । अलाभेमत्तकाशिन्या दृष्टा तिर्य्यक्तु कामितेत्युदाहरणात् ।

स्यादेतत् आत्मा तु किं स्वप्रकाशसुखस्वभावोऽन्यथा वेति पृच्छामः आढ्योऽसि चेत् उपनिषदं पृच्छ मध्यस्थोऽसि चेत् अनुभवं पृच्छ नैयायिकोऽसि चेत् न नैयायिकसुखज्ञानातिरिक्तस्वभावइति निश्चिनुयाः । तदतिरिक्ते तु सुखज्ञानव्यवहारवीजाभावात् तद्व्यवहाराभावः अनुग्रहाभिव्यक्तेन्द्रियप्रसादादिलक्षणकार्य्यं हि तद्व्यवहार वीजम् । अर्थ प्रवणत्वस्मृतिसंस्कारादिकार्य्यञ्च ज्ञानव्यवहारवीजं लोके तयोश्चाभाव आत्मनीति । तस्मात्

श्रुतेः श्रुत्वात्मानं तदनु समनुक्रान्तवपुषो
विनिश्चित्य न्यायादथ विहितहेयव्यतिकरम् ।
उपासीत श्रुत्वा शमदमविरामैकविभवो
भवोच्छित्त्यै चित्तप्रणिधिविहितैर्योगविधिभिः ॥

उपास्यमाने तस्मिन् प्रथमं वहिरर्थएव भासते यमाश्रित्य धर्म्म मीमांसोपसंहारः चार्वाकसमुत्थानञ्च तत्प्रतिपादनार्थं पराञ्चिखानि इत्यादि । तद्धानार्थं परं कर्म्मभ्यइत्यादि । अथार्थाकारः यमाश्रित्य बौद्धिकमतोपसंहारः योगाचारसमुत्थानञ्च तत्प्रतिपादनार्थमात्मैवेदं सर्वमित्यादि । तद्धानार्थमगन्धमरसमित्यादि । अथार्थाभावः यमाश्रित्य वेदान्तदारमाध्यमोपसंहारः शून्यत्वनैरात्म्यसमुत्थानञ्च तत् प्रतिपादनार्थमसदेवेदमग्रआसीदित्यादि । तद्धानाय अन्धन्तमः प्रविशन्ति ये केचात्महनोजनाइत्यादि । ततोविवेकः यमाश्रित्य सांख्य मतोपसंहारः शक्तिसत्वसमुत्थानञ्च । तत्प्रतिपादनार्थञ्च प्रकृतेः परः

त्वादित्यादि तद्दाणाय नान्यत् सदित्यादि। ततः केवल आत्मा प्रकाशते यमाश्रित्याद्वैतमतोपसंहारः तत्प्रतिपादनार्थं न पश्यतीत्याऽऽएकी भवतीत्यादि। तद्दाणार्थं नाद्वैतं नापि च द्वैतमित्यादि। ततः समस्त संस्काराभिभवात् केवलोपि न विकल्पते यमाश्रित्य चरमवेदान्तोपसंहारः तत्प्रतिपादनार्थं यतोवाचोनिवर्त्तन्ते अप्राप्य मनसा सहेत्यादि। सा चावस्था न हेया मोक्षनगरगोपुरायमाणत्वात्। निर्वाणन्तु तस्याः स्वयमेव यदाश्रित्य न्यायदर्शनोपसंहारः तत्प्रतिपादनार्थम्। अथ यो निष्काम आत्मकाम आप्तकामः स ब्रह्मैव सन् ब्रह्माप्येति न तस्य प्राणा उत्क्रामन्ति तत्रैव समवलीयन्तइत्यादि तस्मादभ्यासकामोऽप्यपद्वाराणि विहाय पुरद्वारं प्रविशेत् यतो मार्गं विमार्गसंसर्गसम्मोहमाशङ्कमानैरध्यते लप्स्येत अनुना योगइति।

बहुतरपरतन्त्रप्रान्तरभ्रान्तभीत
स्तिमितपथिकरक्षासार्थवाहेन यत्नात्।
इदमुदयकरेण न्यायलोकागमानाम्
व्यतिकृतिमवधूय व्यञ्जितं वर्त्म मुक्तेः॥

नास्य श्लाघामकलितगुणः पोषयन् प्रीतये नः
कोऽन्यै श्छिन्नस्तुतिप्रतविधौ श्रिल्पिनः स्यात् प्रकर्षः।
निन्दामेव प्रथयतु जनः किन्तु दोषान्निरूप्य
प्रेक्ष्यांस्तस्य स्खलितवचनं प्रीणयेदेव भूयः॥

इति श्रीमदुदयनाचार्य्य कृत आत्मतत्त्वविवेकः
समाप्तः।